# ऐतरेय आरण्यक
## अथ प्रथमारण्यकम्

ओम् ॥ अथ महाव्रतम् । इन्द्रो वै वृत्रं हत्वा महानभवद्यन्महान-
भवत्तन्महाव्रतमभवत्तन्महाव्रतस्य महाव्रतत्वम् । द्वे एतस्याह्न आ-
ज्ये जुर्यादिति हैक आहुरेकमिति त्वेव स्थितम् । प्र वो देवायाग्नय
इति राद्धिकामः । विशो विशो वो अतिथिमिति पुष्टिकामः । पुष्टिर्वै
विशः पुष्टिमान्भवतीति । अतिथिमिति पदं भवति नैतत्कुर्यादि-
त्याहुरीश्वरोऽतिथिरेव चरितोः । तदु ह स्माह कुर्यादेव । यो वै
भवति यः श्रेष्ठतामश्नुते स वा अतिथिर्भवति । न वा असन्त-
मातिथ्यायाद्रियन्ते । तस्मादु काममेवैतत्कुर्यात् । स यद्येतत्कु-
र्यादागन्म वृत्रहन्तममित्येतं तृचं प्रथमं कुर्यात् । एतद्वा अहरीप्सन्तः
संवत्सरमासते त आगच्छन्ति । त एतेऽनुष्टुप्शीर्षाणस्त्रयस्तृचा भवन्ति
ब्रह्म वै गायत्री वागनुष्टुब्ब्रह्मणैव तद्वाचं संदधाति । अबोध्यग्निः
समिधा जनानामिति कीर्तिकामः । होताजनिष्ट चेतन इति प्रजाप-
शुकामः १

अग्निं नरो दीधितिभिररण्योरित्यन्नाद्यकामः । अग्निर्वा अन्नादः ।
चिरतरमिव वा इतरेष्वाज्येष्वग्निमागच्छन्त्यथेह मुखत एवाग्निमाग-
छन्ति मुखतोऽन्नाद्यमश्नुते मुखतः पाप्मानमपघ्नते । हस्तच्युती ज-
नयन्तेति जातवदेतस्माद्वा अह्नो यजमानो जायते तस्माज्जातवत् । तानि
चत्वारि छन्दांसि भवन्ति चतुष्पादा वै पशवः पशूनामवरुद्ध्यै । तानि
त्रीणि छन्दांसि भवन्ति त्रयो वा इमे त्रिवृतो लोका एषामेव
लोकानामभिजित्यै । ते द्वे छन्दसी भवतः प्रतिष्ठाया एव । द्विप्र-
तिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु
पशुषु प्रतिष्ठापयति । ताः पराग्वचनेन पञ्चविंशतिर्भवन्ति पञ्चविं-
शोऽयं पुरुषो दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आ-
त्मैव पञ्चविंशस्तमिममात्मानं पञ्चविंशं संस्कुरुते । अथो पञ्चविंशं वा

एतदहः पञ्चविंश एतस्याह्न स्तोमस्तत्समेन समं प्रतिपद्यते तस्माद्द्वे एव पञ्चविंशतिर्भवन्ति । तास्त्रिः प्रथमया त्रिरुत्तमयैकया न त्रिंशन्नयूनात्तरा विराट् । न्यूने वै रेतः सिच्यते न्यूने प्राणा न्यूनेऽन्नाद्यं प्रतिष्ठितमेतेषां कामानामवरुद्ध्यै । एतान्कामानवरुन्धे य एवं वेद । ता अभिसंपद्यन्ते बृहतीं च च विराजं च छन्दो यैतस्याह्नः संपत्तामथो अनुष्टुभमनुष्टुबा-यतनानि ह्याज्यानि २

गायत्रं प्रउगं कुर्यादित्याहुस्तेजो वै ब्रह्मवर्चसं गायत्री तेजस्वी ब्रह्म-वर्चसी भवतीति । औष्णिहं प्रउगं कुर्यादित्याहुरायुर्वा उष्णिगायु-ष्मान्भवतीति । आनुष्टुभं प्रउगं कुर्यादित्याहुः क्षत्रं वा अनुष्टुप्क्षत्र-स्याप्त्या इति । बार्हतं प्रउगं कुर्यादित्याहुः श्रीर्वै बृहती श्रीमान्भ-वतीति । पाङ्क्तं प्रउगं कुर्यादित्याहुरन्नं वै पङ्क्तिरन्नवान्भवतीति । त्रैष्टुभं प्रउगं कुर्यादित्याहुर्वीर्यं वै त्रिष्टुब्वीर्यवान्भवतीति । जागतं प्रउगं कुर्यादित्याहुर्जागता वै पशवः पशुमान्भवतीति । तदु गायत्रमेव कुर्याद्ब्रह्म वै गायत्री ब्रह्मैतदहर्ब्रह्मणैव तद्ब्रह्म प्रतिपद्यते । तदु माधु-च्छन्दसम् । मधु ह स्म वा ऋषिभ्यो मधुछन्दाश्छन्दति तन्मधुछन्दसो मधुछन्दस्त्वम् । अथो अन्नं वै मधु सर्वं वै मधु सर्वे वै कामा मधु तद्यन्माधुछन्दसं शंसति सर्वेषां कामानामवरुध्यै । सर्वान्कामा-नवरुन्धे य एवं वेद । तद्वैकाहिकं रूपसमृद्धं बहु वा एतस्मिन्नहनि किञ्च किञ्च वारणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत्प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति । प्रतितिष्ठति य एवम् वेद येषां चैव विद्वानेतद्धोता शंसति ३

वायवा याहि दर्शतेमे सोमा अरंकृता इत्येतद्वा अहररं यजमानाय च देवेभ्यश्च । अरं हास्मा एतदहर्भवति य एवं वेद येषां चैवं विद्वाने-तद्धोता शंसति । इन्द्रवायू इमे सुता आ यातमुप निष्कृतमिति यद्वै निष्कृतं तत्संस्कृतम् । आ हास्येन्द्रवायू संस्कृतं गछतो य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति । मित्रं हुवे पूतदक्षं धियं घृताचीं

साधन्तेति वाग्वै धीर्घृताची । वाचमेवास्मिंस्तद्दधाति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति । अश्विना यज्वरीरिष इत्यन्नं वा इषो ऽन्नाद्यस्यावरुद्ध्यै । आ यातं रुद्रवर्तनी इत्या हास्याश्विनौ यज्ञं गछतो य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति । इन्द्रा याहि चित्रभानविन्द्रा याहि धियेषित इन्द्रा याहि तूतुजान इत्यायाह्यायाही-ति शंसति । आ हास्येन्द्रो यज्ञं गछति य एवं वेद येषां चैवं वि-द्वानेतद्धोता शंसति । ओमासश्चर्षणीधृतो विश्वे देवास आ गतेत्या हास्य विश्वे देवा हवं गछन्ति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति । दाश्वांसो दाशुषः सुतमिति यदाह ददुषो ददुषः सुतमित्येव तदाह । ददति हास्मै तं कामं देवा यत्काम एतच्छंसति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति । पावका नः सरस्वती यज्ञं वष्टु धियावसुरिति वाग्वै धियावसुः । वाचमेवास्मिंस्तद्दधाति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति । यज्ञं वष्ट्विति यदाह यज्ञं वहत्वित्येव तदाह । ताः पराग्वचनेनैकविंशतिर्भवन्त्येकविंशोऽयं पुरुषो दश ह-स्त्या अङ्गुलयो दश पाद्या आत्मैकविंशस्तमिममात्मानमेकविंशं संस्कुरुते । तास्त्रिः प्रथमया त्रिरुत्तमया पञ्चविंशतिर्भवन्ति पञ्चविंश आत्मा पञ्चविंशः प्रजापतिर्दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशस्तमिममात्मानं पञ्चविंशं संस्कुरुते । अथो पञ्चविंशं वा एतदहः पञ्चविंश एतस्याह्न स्तोमस्तत्समेन समं प्रतिपद्यते तस्माद्द्वे एव पञ्चविंशतिर्भवन्ति भवन्ति ४

इत्यैतरेयप्रथमारण्यके प्रथमोऽध्यायः

आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपद-नुचरौ । ऐकाहिकौ रूपसमृद्धौ बहु वा एतस्मिन्नहनि किञ्च किञ्च वारणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः शान्त्यामेव तत्प्रति-ष्ठायामन्ततः प्रतितिष्ठन्ति । प्रतितिष्ठति य एवं वेद येषाम् चैवं वि-द्वानेतद्धोता शंसति । इन्द्र नेदीय एदिहि प्र सू तिरा शचीभिर्ये त उक्थिन इत्युक्थं वा एतदहरुक्थवदूपसमृद्धमेतस्याह्नो रूपम् । प्रैतु

ब्रह्मणस्पतिरछा वीरमिति वीरवद्रूपसमृद्धमेतस्याह्नो रूपम् । उत्तिष्ठ ब्रह्मणस्पते सुवीर्यमिति वीर्यवदूपसमृद्धमेतस्याह्नो रूपम् । प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यमित्युक्थं वा एतदहरुक्थवद्रूपसमृद्धमेत-स्याह्नो रूपम् । अग्निर्नेता स वृत्रहेति वार्त्रघ्नमिन्द्ररूपमैन्द्रमेतदहरे-तस्याह्नो रूपम् । त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं वृषा वृषत्वेभिर्म-हित्वेति वृषणवद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेतस्याह्नो रूपम् । पिन्व-न्त्यपोऽत्यं न मिहे वि नयन्ति वाजिनमिति वाजिमद्वा इन्द्रस्य रूप-मैन्द्रमेतदहरेतस्याह्नो रूपम् । अथो उत्सं दुहन्ति स्तनयन्तमक्षित-मिति स्तनयद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेतस्याह्नो रूपम् । प्र व इ-न्द्राय बृहत इति यद्वै बृहत्तन्महन्महद्वद्रूपसमृद्धमेतस्याह्नो रूपम् । बृहदिन्द्राय गायतेति यद्वै बृहत्तन्महन्महद्वद्रूपसमृद्धमेतस्याह्नो रूपम् । नकिः सुदासो रथं पर्यास न रीरमदिति पर्यस्तवद्रान्तिमद्रूपसमृद्ध-मेतस्याह्नो रूपम् । सर्वान्प्रगाथाञ्छंसति सर्वेषामह्नामाप्त्यै सर्वेषा-मुक्थानां सर्वेषां पृष्ठानां सर्वेषां शस्त्राणां सर्वेषां प्रउगाणां सर्वेषां सवनानाम् १

असत्सु मे जरितः साभिवेगः सत्यध्वृतमिति शंसति सत्यं वा एतद-हः सत्यवद्रूपसमृद्धमेतस्याह्नो रूपम् । तदु वासुक्रं ब्रह्म वै वसुक्रो ब्रह्मैतदहर्ब्रह्मणैव तद्ब्रह्म प्रतिपद्यते । तदाहुरथ कस्माद्वासुक्रेणैत-न्मरुत्वतीयं प्रतिपद्यत इति न ह वा एतदन्यो वसुक्रान्मरुवतीयमुद-यछन्न विव्याचेति तस्माद्वासुक्रेणैवैतन्मरुत्वतीयं प्रतिपद्यते । तद-निरुक्तं प्राजापत्यं शंसत्यनिरुक्तो वै प्रजापतिः प्रजापतेराप्त्यै । स-कृदिन्द्रं निराह तेनैन्द्राद्रूपान्न प्रच्यवते । पिबा सोममभि यमुग्र तर्द इति शंसति । ऊर्वं गव्यं महि गृणान इन्द्रेति महद्वद्रूपसमृद्धमेतस्याह्नो रूपम् । तदु भारद्वाजं भरद्वाजो ह वा ऋषीणामनूचानतमो दीर्घजीवि-तमस्तपस्वितम आस स एतेन सूक्तेन पाप्मानमपाहत तद्यद्भारद्वाजं शंसति पाप्मनो ऽपहत्या अनूचानो दीर्घजीवी तपस्व्यसानीति तस्माद्भारद्वाजं शंसति । कया शुभा सवयसः सनीळा इति शंसति

। ग्रा शासते प्रति हर्यन्त्युक्थेत्युक्थं वा एतदहरुक्थवद्रूपसमृद्धमेतस्या-
ह्नो रूपम् । तदु कयाशुभीयमेतद्वै संज्ञानं सन्तनि सूक्तं यत्क-
याशुभीयमेतेन ह वा इन्द्रोऽगस्त्यो मरुतस्ते समजानत तद्यत्क-
याशुभीयं शंसति संज्ञात्या एव । तद्वायुष्यं तद्योऽस्य प्रियः स्या-
त्कुर्यादेवास्य कयाशुभीयम् । मरुत्वाँ इन्द्र वृषभो रणायेति शंसति ।
इन्द्र वृषभ इति वृषरवद्वा इन्द्रस्य रूपमैन्द्रमेतदहरेतस्याह्नो रूपम् ।
तदु वैश्वामित्रं विश्वस्य ह वै सित्रं विश्वामित्र ग्रास । विश्वं हास्मै मित्रं
भवति य एवं वेद येषां चैवं विद्वानेतद्धोता शंसति । जनिष्ठा उग्रः
सहसे तुरायेति निविद्धानमैकाहिकं रूपसमृद्धं बहु वा एतस्मिन्नहनि
किञ्च किञ्च वारणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैका-
हःशान्त्यामेव तत्प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति । प्रतितिष्ठति य एवं
वेद येषाम् चैवं विद्वानेतद्धोता शंसति । ताः पराग्वचनेन स-
प्तनवतिर्भवन्ति सा या नवतिस्तिस्रस्तास्त्रिंशन्यो विराजोऽथ याः स-
प्तातियन्ति यैवैषा प्रशंसा साप्तयस्य तस्या एव । तास्त्रिः प्रथमया
त्रिरुत्तमयैकशतं भवन्ति पञ्चाङ्गुलयश्चतुष्पर्वा द्वे कद्तसी दोश्चाद्तश्चांस-
फलकं च सा पञ्चविंशतिः पञ्चविंशानोतराणि ह्यङ्गानि तच्छतमात्मै-
कशततमः । यच्छतं तदायुरिन्द्रियं वीर्यं तेजो यजमान एकशततम
ग्रायुषीन्द्रिये वीर्ये तेजसि प्रतिष्ठितः । तास्त्रिष्टुभमभिसंपद्यन्ते त्रैष्टुभो
हि मध्यन्दिनः २

तदाहुः किं प्रेङ्खस्य प्रेङ्खत्वमित्ययं वै प्रेङ्खो योऽयं पवत एष ह्येषु लो-
केषु प्रेङ्खत इति तत्प्रेङ्खस्य प्रेङ्खत्वम् । एकं फलकं स्यादित्याहुरेकधा
ह्येवायं वायुः पवतेऽस्य रूपेणेति । तत्तन्नादृत्यम् । त्रीणि फल-
कानि स्युरित्याहुस्त्रयो वा इमे त्रिवृतो लोका एषां रूपेणेति । तत्त-
न्नादृत्यम् । द्वे एव स्यातां द्वौ वा इमौ लोकावद्धातमाविव दृश्येते य
उ एने ग्रन्तरेणाकाशः सोऽन्तरिद्तलोकस्तस्माद्द्वे एव स्याताम् ।
ग्रौदुम्बरे स्यातामूर्ग्वा ग्रन्नाद्यमुदुम्बर ऊर्जोऽन्नाद्यस्यावरुद्धयै । म-
ध्यत उद्धृते स्यातां मध्यतो वै प्रजा ग्रन्नं धिनोति मध्यत एव तदन्ना-

द्यस्य यजमानं दधाति । उभय्यो रज्जवो भवन्ति दक्षिणाश्च सव्याश्च दक्षिणा वा एकेषां पशूनां रज्जवः सव्या एकेषां तद्यदुभय्यो रज्जवो भवन्त्युभयेषां पशूनामप्तयै । दार्भ्यः स्युर्दर्भो वा ओषधीनामपहत-पाप्मा तस्माद्दार्भ्यः स्युः ३

अरत्निमात्र उपरि भूमेः प्रेङ्खः स्यादित्याहुरेतावता वै स्वर्गा लोकाः संमिता इति । तत्तन्नादृत्यम् । प्रादेशमात्रे स्यादित्याहुरेतावता वै प्राणाः संमिता इति । तत्तन्नादृत्यम् । मुष्टिमात्रे स्यादेतावता वै सर्वमन्नाद्यं क्रियत एतावता सर्वमन्नाद्यमभिपन्नं तस्मान्मुष्टिमात्र एव स्यात् । पुरस्तात्प्रत्यञ्चं प्रेङ्खमधिरोहेदित्याहुरेतस्य रूपेण य एष त-पति पुरस्ताद्ध्येष इमाँल्लोकान्प्रत्यङ्ङधिरोहतीति । तत्तन्नादृत्यम् । तिर्यञ्चमधिरोहेदित्याहुस्तिर्यञ्च वा अश्वमधिरोहन्ति तनो सर्वान्का-मानवाप्नवामेति । तत्तन्नादृत्यम् । अन्वञ्चमधिरोहेदित्याहुरनूचीं वै नावमधिरोहन्ति नौर्वैषा स्वर्गयाणी यत्प्रेङ्ख इति तस्मादन्वञ्चमेवाधि-रोहेत् । छुवुकेनोपस्पृशेच्छुको हैवं वृक्षमधिरोहति स उ वयसाम-न्नादतम इति तस्माच्छुवुकेनोपस्पृशेत् । बाहुभ्यामधिरोहेदेवं श्येनो वयांस्यभि निविशत एवं वृक्षं स उ वयसां वीर्यवत्तम इति तस्मा-द्बाहुभ्यामधिरोहेत् । अस्यै पादं नोच्छिन्द्यान्नेदस्यै प्रतिष्ठाया उच्छि-द्या इति । प्रेङ्खं होताधिरोहत्यौदुम्बरीमासन्दीमुद्गाता वृषा वै प्रेङ्खो योषासन्दी तन्मिथुनं मिथुनमेव तदुक्थमुखे करोति प्रजात्यै । प्र-जायते प्रजया पशुभिर्य एवं वेद । अथान्नं वै प्रेङ्खः श्रीरासन्द्यन्नं चैव तच्छ्रियं चान्वधिरोहतः । बृसीर्होत्रकाः समधिरोहन्ति सब्रह्मकाः । समुत्सृप्य वा ओषधिवनस्पतयः फलं गृह्णन्ति तद्यदेतस्मिन्नहनि स-र्वशः समधिरोहन्तीषमेव तदूर्जमन्नाद्यमधिरोहन्त्यूर्जोऽन्नाद्यस्यावरुद्ध्यै । वषट्कृत्यावरोहेदित्याहुः । तत्तन्नादृत्यम् । अकृता वै साप-चितिर्यामपश्यते करोति । निगृह्य भक्षमवरोहेदित्याहुः । तत्तन्ना-दृत्यम् । अकृता वै सापचिकिर्यामध्यृष्टाय करोति । प्रतिख्याय भक्षमवरोहेदेषा वा अपचितिर्यां पश्यते करोति तस्मात्प्रतिख्यायैव

भक्षमवरोहेत् । प्राङवरोहेत् । प्राग्वै देवरेतसं प्रजायते तस्मा-त्प्राङवरोहेदवरोहेत् ४

इत्यैतरेयप्रथमारण्यके द्वितीयोऽध्यायः

हिङ्कारेणैतदहः प्रतिपद्येतेत्याहुः । ब्रह्म वै हिङ्कारो ब्रह्मैतदहर्ब्रह्मणैव तद्ब्रह्म प्रतिपद्यते य एवं वेद । यदेव हिङ्कारेण प्रतिपद्यता३इ वृषा वै हिङ्कारो योषर्क्तन्मिथुनं मिथुनमेव तदुक्थमुखे करोति प्रजात्यै । प्रजायते प्रजया पशुभिर्य एवं वेद । यद्वेव हिङ्कारेण प्रतिपद्यता३इ यथा वा अभ्रिरेवं ब्रह्मणो हिङ्कारो यद्वै किञ्चाभ्रियाभितितृत्सत्यभ्येवै-तत्तृणत्त्येवम् । यं कामं कामयते हिङ्कारेणाभ्येवैनं तृणत्ति य एवं वेद । यद्देव हिङ्कारेण प्रतिपद्यता३इ वाचो वा एषा व्यावृत्तिर्दैव्यै च मा-नुष्यै च यद्धिङ्कारः । स यद्धिङ्कृत्य प्रतिपद्यते वाचमेव तद्व्यावर्तयति दैवीं च मानुषीं च १

तदाहुः कैतस्याह्नः प्रतिपदिति । मनश्च वाक्चेति ब्रूयात् । सर्वे-ऽन्यस्मिन्कामाः श्रिताः सर्वानन्या कामन्दुहे । मनसि वै सर्वे का-माः श्रिता मनसा हि सर्वान्कामान्ध्यायति । सर्वे हास्मिन्कामाः श्रयन्ते य एवं वेद । वाग्वै सर्वान्कामान्दुहे वाचा हि सर्वान्कामान्वदति । सर्वान्हास्मै कामान्वाग्दुहे य एवं वेद । तदाहुर्नैतदहरृचा न यजुषा न साम्ना प्रत्यक्षात्प्रतिपद्येत नर्चो न यजुषो न साम्न इयादिति । तदेता एव व्याहृतीः पुरस्ताज्जपेत् । भूर्भुवः स्वरित्येता वाव व्याहृतय इमे त्रयो वेदा भूरित्येव ऋग्वेदो भुव इति यजुर्वेदः स्वरिति सामवेदः । तन्नर्चा न यजुषा न साम्ना प्रत्यक्षात्प्रतिपद्यते नर्चो न यजुषो न साम्न एति २

तदिति प्रतिपद्यते तत्तदिति वा अन्नमन्नमेव तदभिप्रतिपद्यते । एतां वाव प्रजापतिः प्रथमां वाचं व्याहरदेकाक्षरद्व्यक्षरां ततेति तातेति । तथै-वैतत्कुमारः प्रथमवादी वाचं व्याहरत्येकाक्षरद्व्यक्षरां ततेति तातेति ।

तयैव तत्ततवत्या वाचा प्रतिपद्यते । तदुक्तमृषिणा । बृहस्पते प्रथमं वाचो अग्रमित्येतद्ध्येव प्रथमं वाचो अग्रम् । यत्प्रैरत नामधेयं दधाना इति वाचा हि नामधेयानि धीयन्ते । यदेषां श्रेष्ठं यदरिप्रमासी- दित्येतद्ध्येव श्रेष्ठमेतदरिप्रम् । प्रेणा तदेषां निहितं गुहाविरितीदमु ह गुहाध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत्तदुक्तं भवति ३

तदिदास भुवनेषु ज्येष्ठमिति प्रतिपद्यत एतद्ध्वाव भुवनेषु ज्येष्ठम् । यतो जज्ञ उग्रस्त्वेषनृम्ण इत्यतो ह्येष जात उग्रस्त्वेषनृम्णः । सद्यो जज्ञानो निरिणाति शत्रूनिति सद्यो ह्येष जातः पाप्मानमपाहत । अनु यं विश्वे मदन्त्यूमा इति भूतानि वै विश्व ऊमास्त एनमनुमदन्त्युदगादुदगादिति । वावृधानः शवसा भूर्योजा इति एष वै वावृधानः शवसा भूर्योजाः । शत्रुर्दासाय भियसं दधातीति सर्वं ह्येतस्माद्बिभाय । अव्यनच्च व्यनच्च सस्नीति यच्च प्राणि यच्चाप्राणकमित्येव तदाह । सं ते नवन्त प्रभृता मदेष्विति तव सर्वं वश इत्येव तदाह । त्वे क्रतुमपि वृञ्जन्ति विश्व इति त्वयीमानि सर्वाणि भूतानि सर्वाणि मनांसि सर्वे क्रतवोऽपि वृञ्जन्तीत्येव तदाह । द्विर्यदेते त्रिर्भवन्त्यूमा इति द्वौ वै सन्तौ मिथुनौ प्रजायेते प्रजात्यै । प्रजायते प्रजया पशुभिर्य एवं वेद । स्वादोः स्वादीयः स्वादुना सृजा समिति मिथुनं वै स्वादु प्रजा स्वादु मिथुनेनै- व तत्प्रजां संसृजति । अदः स मधु मधुनाभि योधीरिति मिथुनं वै मधु प्रजा मधु मिथुनेनैव तत्प्रजामभियुध्यति । तदुक्तमृषिणा । स्वां यत्तनूं तन्वामैरयतेत्यस्यां शारीर्यामिमां छन्दोमयीमित्येव तदाह । अथो तनूरेव तन्वो अस्तु भेषजमित्यस्यै शारीर्या इयं छन्दोमयीत्येव तदाह । तस्यै यान्यष्टावक्षराणि सा गायत्री यान्येकादश सा त्रिष्टुब्यानि द्वादश सा जगत्यथ यानि दश सा विराड्दशिन्येषु त्रिषु छन्दःसु प्रतिष्ठिता । पुरुष इति त्र्यक्षरं स उ विराजि । एतानि वाव सर्वाणि छन्दांसि यान्येतानि विराट्तुर्थान्येवमु हैवैवं विदुष एतदहः सर्वैश्छन्दोभिः प्रतिपन्नं भवति ४

ता नदेन विहरति । पुरुषो वै नदस्तस्मात्पुरुषो वदन्सर्वः संनदतीव । नदं व ओदतीनामितीँ३ आपो वा ओदत्यो या दिष्यास्ता हीदं सर्वमुन्दन्त्यापो वा ओदत्यो या मुख्यास्ता हीदं सर्वमन्नाद्यमुन्दन्ति । नदं योयुवतीनामितीँ३ आपो वाव योयुवत्यो या अन्तरिक्ष्यास्ता हि पोप्लूयन्त इवापो वाव योयुवत्यो याः स्वेदते ता हि सरीसृप्यन्त इव । पतिं वो अघ्न्यानामितीँ३ आपो वा अघ्न्या या अग्नेर्धूमाज्जायन्त आपो वा अघ्न्या याः शिश्नात्प्रसृज्यन्ते । धेनूनामिषुध्यसीतीँ३ आपो वाव धेनवस्ता हीदं सर्वं धिन्वन्तीषुध्यसीति यदाह पतीयसीत्येव तदाह । त्रिष्टुभं चानुष्टुभं च विहरति वृषा वै त्रिष्टुब्योषानुष्टुप्तन्मिथुनं तस्मादपि पुरुषो जायां वित्त्वा कृत्स्नतरमिवात्मानं मन्यते । तास्त्रिः प्रथमया पञ्चविंशतिर्भवन्ति पञ्चविंश आत्मा पञ्चविंशः प्रजापतिर्दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशस्तमिममात्मानं पञ्चविंशं संस्कुरुते । अथो पञ्चविंशं वा एतदहः पञ्चविंश एतस्याह्न स्तोमस्तत्समेन समं प्रतिपद्यते तस्माद्द्वे एव पञ्चविंशतिर्भवन्ति ५

तदिति प्रतिपद्यते तत्तदिति वा अन्नमन्नमेव तदभिप्रतिपद्यते । एतां वाव प्रजापतिः प्रथमां वाचं व्याहरदेकाक्षरद्व्यक्षरां ततेति तातेति । तथैवैतत्कुमारः प्रथमवादी वाचं व्याहरत्येकाक्षरद्व्यक्षरां ततेति तातेति । तयैव तत्ततवत्या वाचा प्रतिपद्यते । तदुक्तमृषिणा । बृहस्पते प्रथमं वाचो अग्रमित्येतद्ध्येव प्रथमं वाचो अग्रम् । यत्प्रैरत नामधेयं दधाना इति वाचा हि नामधेयानि धीयन्ते । यदेषां श्रेष्ठं यदरिप्रमासीदित्येतद्ध्येव श्रेष्ठमेतदरिप्रम् । प्रेणा तदेषां निहितं गुहाविरितीदमु ह गुहाध्यात्ममिमा देवता अद् उ आविरधिदैवतमित्येतत्तदुक्तं भवति ६

तदिदास भुवनेषु ज्येष्ठमिति प्रतिपद्यते यद्वै ज्येष्ठं तन्महन्महद्वद्रूपसमृद्धमेतस्याह्नो रूपम् । तां सु ते कीर्तिं मघवन्महित्वेति महद्वद्रूपसमृद्धमेतस्याह्नो रूपम् । भूय इद्वावृधे वीर्यायेति वीर्यवद्रूपसमृद्धमे-

तस्याह्नो रूपम् । नृणामु त्वा नृतमं गीर्भिरुक्थैरित्युक्थं वा एतदह-रुक्थवद्रूपसमृद्धमेतस्याह्नो रूपम् । न्यूनाक्षरे प्रथमे पदे विहरति न्यूने वै रेतः सिच्यते न्यूने प्राणा न्यूनेऽन्नाद्यं प्रतिष्ठितमेतेषां कामाना-मवरुद्ध्यै । एतान्कामानवरुन्धे य एवं वेद । द्वे दशाक्षरे भवत उभयोरन्नाद्ययोरुपाप्त्यै यच्च पद्वद्यच्चापादकमिति । अष्टादशाष्टाद-शाक्षराणि भवन्ति यानि दश नव प्राणा आत्मैव दशमः सात्मनः सं-स्कृतिरष्टावष्टा उद्यन्ते । अश्नुते यद्यत्कामयते य एवं वेद ७

ता नदेन विहरति । प्राणो वै नदस्तस्मात्प्राणो नदन्सर्वः संनदतीव । नदं व ओदतीनामितीँ३ उष्णिगक्षरैर्भवत्यनुष्टुप्पादैरायुर्वा उष्णि-ग्वागनुष्टुप् । तदस्मिन्नायुश्च वाचं च दधाति । तास्त्रिः प्रथमया पञ्चविंशतिर्भवन्ति पञ्चविंश आत्मा पञ्चविंशः प्रजापतिर्दश हस्त्या अङ्गुलयो दश पाद्या द्वा ऊरू द्वौ बाहू आत्मैव पञ्चविंशस्तमिममात्मानं पञ्चविंशं संस्कुरुते । अथो पञ्चविंशं वा एतदहः पञ्चविंश एतस्याह्न स्तोमस्तत्समेन समं प्रतिपद्यते तस्माद्द्वे एव पञ्चविंशतिर्भवन्ति । इत्यध्यात्मं पञ्चविंशः । अथाधिदैवतम् । चक्षुः श्रोत्रं मनो वाक्प्राणः ता एताः पञ्च देवता इमं विष्टाः पुरुषं पञ्चो हैवैता देवता अयं विष्टः पुरुषः । सोऽत्रालोमभ्य आनखेभ्यः सर्वः साङ्ग आप्यते तस्मात्सर्वाणि भूतान्यापिपीलिकाभ्य आप्तान्येव जायन्ते । तदुक्तमृषिणा । सहस्रधा पञ्चदशान्युक्थेति पञ्च हि दशतो भवन्ति । यावद्द्यावापृथिवी तावदित्तदिति यावती वै द्यावापृथिवी तावानात्मा । सहस्रधा महिमानः सहस्रमित्युक्थान्येव तदनुमदति महयति । यावद्ब्रह्म विष्ठितं तावती वागिति यत्र ह क्व च ब्रह्म तद्वाग्यत्र वा वाक्तद्वा ब्रह्मेत्येतत्तदुक्तं भवति । एषां वा एषां सूक्तानां नवर्चं प्रथमं नव वै प्राणाः प्राणानां क्लृप्त्यै । षळृचं भवति षड्वा ऋतव ऋतूनामाप्त्यै । पञ्चर्चं भवति पञ्चपदा पङ्क्तिः पङ्क्तिर्वा अन्नमन्नाद्यस्यावरुद्ध्यै । तृचो भवति त्रयो वा इमे त्रिवृतो लोका एषामेव लोकानामभिजित्यै । ता अभिसंपद्यन्ते बृहतीं छन्दोऽमृतं देवलोकमेष आत्मा । एवमुहैवैवं

विदेतयैव संपदामृतमेवात्मानमभिसंभवति संभवति ८
इत्यैतरेयप्रथमारगयके तृतीयोऽध्यायः

अथ सूददोहाः । प्राणो वै सूददोहाः प्राणेन पर्वाणि संदधाति । अथातो ग्रीवाः । ता आचक्षते यथाछन्दसमुष्णिह इति । अथ सूददोहाः । प्राणो वै सूददोहाः प्राणेन पर्वाणि संदधाति । अथा-तः शिरः । तद्गायत्रीषु भवत्यग्रं वै छन्दसां गायत्र्यग्रमङ्गानां शिरः । तदर्कवतीषु भवत्यग्निर्वा अर्कः । ता नव भवन्ति नवकपालं वै शिरः । दशमीं शंसति त्वक्केशा इत्येव सा भवति । अथो स्तो-मातिशंसनाया एव । तौ त्रिवृच्च स्तोमो भवतो गायत्रं च छन्द एत-योर्वै स्तोमछन्दसोः प्रजातिमनु सर्वमिदं प्रजायते यदिदं किञ्च प्रजात्यै । प्रजायते प्रजया पशुभिर्य एवं वेद । अथ सूददोहाः । प्राणो वै सूददोहाः प्राणेन पर्वाणि संदधाति । अथातो विजवः । ता वि-राजो भवन्ति तस्मात्पुरुषः ह्पुरुषमाह वि वा अस्मासु राजसि ग्रीवा वै धारयसीति स्तभमानं वा यद्वा दुताः सम्बाळ्हतमाः सत्योऽन्नतमां प्रत्यच्यन्तेऽन्नं हि विराळन्नमु वीर्यम् । अथ सूददोहाः । प्राणो वै सूददोहाः प्राणेन पर्वाणि संदधाति १

अथातो दक्षिणः पक्षः । सोऽयं लोकः सोऽयमग्निः सा वाक्तद्रथन्तरं स वसिष्ठस्तच्छतं तानि षड्वीर्याणि भवन्ति । संपात एव कामा-नामभ्याप्तयै प्रतिष्ठित्या अन्नाद्याय पङ्क्तिः । अथ सूददोहाः । प्राणो वै सूददोहाः प्राणेन पर्वाणि संदधाति । अथात उत्तरः पक्षः । सोऽसौ लोकः सोऽसावादित्यस्तत्मनस्तद्बृहत्स भरद्वाजस्तच्छतं तानि षड्वीर्याणि भवन्ति । संपात एव कामानामभ्याप्तयै प्रतिष्ठित्या अ-न्नाद्याय पङ्क्तिः । ता ऊनातिरिक्तौ भवतो वृषा वै बृहद्योषा रथन्त-रमतिरिक्तं वै पुंसो न्यूनं स्त्रियै तस्मादूनातिरिक्तौ भवतः । अथो एकेन ह वै पत्त्रेण सुपर्णस्योत्तरः पक्षो ज्यायांस्तस्मादेकयर्चोत्तरः प-क्षो भूयान्भवति । अथ सूददोहाः । प्राणो वै सूददोहाः प्राणेन प-

र्वाणि संदधाति । अथातः पुच्छम् । ता एकविंशतिर्द्विपदा भव-
न्त्येकविंशतिर्हीमानि प्रत्यञ्चि सुपर्णस्य पत्राणि भवन्ति । अथो ए-
कविंशो वै स्तोमानां क्प्रतिष्ठा प्रतिष्ठा पुछं वयसाम् । द्वाविंशीं शं-
सति प्रतिष्ठयोरेव तद्रूपं क्रियते तस्मात्सर्वाणि वयांसि पुछेन प्रतिति-
ष्ठन्ति पुछेनैव प्रतिष्ठायोत्पतन्ति प्रतिष्ठा हि पुछम् । स एष द्वाभ्यां
दशिनीभ्यां विराड्भ्यामनयोर्द्वाविंश्योर्द्विपदयोरयं पुरुषः प्रतिष्ठितः ।
तस्य यत्सुपर्णरूपं तदस्य कामानामभ्याप्तयै । अथ यत्पुरुषरूपं त-
दस्य श्रियै यशसेऽन्नाद्यायापचित्यै । अथ सूददोहाः । अथ धा-
य्या । अथ सूददोहाः । वृषा वै सूददोहा योषा धाय्या तदुभयतः
सूददोहसा धाय्यां परिशंसति तस्माद्द्वयो रेतः सिक्तं सदेकतामेवा-
प्येति योषामेवाभ्यत आजाना हि योषातः प्रजाना तस्मादेनामत्र शं-
सति २

गायत्रीं तृचाशीतिं शंसत्ययं वै लोको गायत्री तृचाशीतिर्यदेवास्मिँ-
ल्लोके यशो यन्महो यन्मिथुनं यदन्नाद्यं यापचितिस्तदश्नवै तदाप्न-
वानि तदवरुणधै तन्मेऽसदिति । अथ सूददोहाः । प्राणो वै सूद-
दोहाः प्राणेनेमं लोकं संतनोति । बार्हतीं तृचाशीतिं शंसत्यन्तरिक्ष-
लोको वै बार्हती तृचाशीतिर्यदेवान्तरिक्षलोके यशो यन्महो यन्मिथुनं
यदन्नाद्यं यापचितिस्तदश्नवै तदाप्नवानि तदवरुणधै तन्मेऽसदिति ।
अथ सूददोहाः । प्राणो वै सूददोहाः प्राणेनान्तरिक्षलोकं संतनोति ।
औष्णिहीं तृचाशीतिं शंसत्यसौ वै लोको द्यौरौष्णिही तृचाशीति-
र्यदेवामुष्मिँल्लोके यशो यन्महो यन्मिथुनं यदन्नाद्यं यापचितिः य-
द्देवानां दैवं तदश्नवै तदाप्नवानि तदवरुणधै तन्मेऽसदिति । अथ
सूददोहाः । प्राणो वै सूददोहाः प्राणेनामुं लोकं संतनोति संतनोति ३
इत्यैतरेयप्रथमारणयके चतुर्थोऽध्यायः

वशं शंसति वशे म इदं सर्वमसदिति । ता एकविंशतिर्भवन्त्येक-
विंशतिर्हि ता अन्तरुदरे विकृतयः । अथो एकविंशो वै स्तोमानां

प्रतिष्ठा प्रतिष्ठोदरमन्नाद्यानाम् । ता विछन्दसो भवन्ति विच्चुद्रमिव वा अन्तस्त्यमणीय इव च स्थवीय इव च । ताः प्रणावं छन्दस्कारं यथोपपादं शंसति यथोपपादमिव वा अन्तस्त्यं ह्रसीय इव च द्राघीय इव च । अथ सूददोहाः । प्राणो वै सूददोहाः प्राणेन पर्वाणि सं-दधाति । तामत्रोत्सृजति द्वादशकृत्वः शस्त्वा द्वादशविधा वा इमे प्राणाः सप्त शीर्षगया द्वौ स्तन्यौ त्रयोऽवाञ्चोऽत्र वै प्राणा आप्यन्तेऽत्र संस्क्रियन्ते तस्मादेनामत्रोत्सृजति । इन्द्राग्नी युवं सु न इत्यैन्द्राग्ना ऊरू उर्वष्ठीवे प्रतिष्ठे । ताः षट्पदा भवन्ति प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति । द्वितीया सप्तपदा भवति तां गायत्रीं चानुष्टुभं च करोति ब्रह्म वै गायत्री वागनुष्टुब्ब्रह्मणैव तद्वाचं संदधाति । त्रिष्टुभमन्ततः शंसति वीर्यं वै त्रिष्टुब्वीर्येणैव तत्पशून्परिगछति तस्मात्प-शवो वीर्यमनूपतिष्ठन्त ईर्यतां चैवाभ्युत्थानं च १

प्र वो महे मन्दमानायान्धस इत्यैन्द्रे निष्केवल्ये निविदं दधाति प्रत्य-त्ताद्ध्येव तदात्मन्वीर्यं धत्ते । तास्त्रिष्टुब्जगत्यो भवन्ति । तदाहु-रथ कस्मात्त्रिष्टुब्जगतीषु निविदं दधातीति । न ह वा एतस्याह्न एकं छन्दो निविदं दाधार न विव्याचेति तस्मात्त्रिष्टुब्जगतीषु निविदं दधाति । तदेतदहस्त्रिनिवित्कं विद्याद्वशो निविद्वालखिल्या निविन्निविदेव निविदेवमेनत्त्रिनिवित्कं विद्यात् । अथ सूक्ते वने न वा यो न्यधायि चाकन्यो जात एव प्रथमो मनस्वानिति तयोरस्त्यन्ने समस्य यदसन्मनीषा इत्यन्नाद्यस्यावरुद्ध्यै । अथावपनमेते अन्तरेणैन्द्रीणां दशतीनां त्रिष्टुब्जगतीनां बृहतीसंपन्नानां यावतीरावपन्ते ता-वन्त्यूर्ध्वमायुषो वर्षाणि जीवन्त्येतेन हैवावपनेनायुराप्यते । प्रजां मे पशवीऽर्जयन्निति त्वेव सजनीयमनुशंसति । तार्च्यं शंसति स्व-स्त्वयनं वै तार्च्यः स्वस्तितायै स्वस्त्वयनमेव तत्कुरुते । एकपदां शंसत्येकधेदं सर्वमसानीत्यथो सर्वां छन्दस्कृतिमाप्नवानीति । इन्द्रं विश्वा अवीवृधन्निति पदानुषङ्गास्ताः सप्तानुषजति सप्त वै शीर्षन्प्राणाः

शीर्षन्नेव तत्प्राणान्दधात्यष्टमीं नानुषजति वागष्टमी नेन्मे वाक्प्राणैरनु-
षक्तासदिति तस्मादु सा वाक्समानायतना प्राणैः सत्यननुषक्ता ।
विराजः शंसत्यन्नं वै विराजोऽन्नाद्यस्यावरुद्ध्यै । वासिष्ठेन परिद-
धाति वसिष्ठोऽसानीति । एष स्तोमो मह उग्राय वाह इति महद्वत्या
रूपसमृद्धया । धुरीवात्यो न वाजयन्नधायीत्यन्तो वै धूरन्त एतदह-
रेतस्याह्नो रूपम् । इन्द्र त्वायमर्क ईट्टे वसूनामित्यर्कवत्या रूपस-
मृद्धया । दिवीव द्यामधि नः श्रोमतं धा इति यत्र ह क्व च ब्रह्मणया
वागुद्यते तद्धास्य कीर्तिर्भवति यत्रैवं विद्वानेतया परिदधाति त-
स्मादेवं विद्वानेतयैव परिदध्यात् २

तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरा-
वैकाहिकौ रूपसमृद्धौ बहु वा एतस्मिन्नहनि किञ्च किञ्च वारणं क्रि-
यते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहःशान्त्यामेव तत्प्रतिष्ठायामन्ततः
प्रतितिष्ठन्ति । प्रतितिष्ठति य एवं वेद येषां चैवं विद्वानेतद्धोता शं-
सति । तद्देवस्य सवितुर्वार्यं महदिति सावित्रमन्तो वै महदन्त एत-
दहरेतस्याह्नो रूपम् । कतरा पूर्वा कतरापरायोरिति द्यावापृथिवीयं
समानोदर्कं समानोदर्कं वा एतदहरेतस्याह्नो रूपम् । अनश्वो जातो
अनभीशुरुक्थ्य इत्यार्भवम् । रथस्त्रिचक्र इति यदेतत्रिवत्तदन्तो वै
त्रिवदन्त एतदहरेतस्याह्नो रूपम् । अस्य वामस्य पलितस्य होतुरि-
ति वैश्वदेवं बहुरूपं बहुरूपं वा एतदहरेतस्याह्नो रूपम् । गौरीर्मि-
माय सलिलानि तक्षतीत्येतदन्तम् । आ नो भद्राः क्रतवो यन्तु वि-
श्वत इति वैश्वदेवं निविद्धानमैकाहिकं रूपसमृद्धं बहु वा एतस्मिन्न-
हनि किञ्च किञ्च वारणं क्रियते शान्त्या एव शान्तिर्वै प्रतिष्ठैकाहः
शान्त्यामेव तत्प्रतिष्ठायामन्ततः प्रतितिष्ठन्ति । प्रतितिष्ठति य एवं वेद
येषां चैवं विद्वानेतद्धोता शंसति । वैश्वानराय धिषणामृतावृध
इत्याग्निमारुतस्य प्रतिपदन्तो वै धिषणान्त एतदहरेतस्याह्नो रूपम् ।
प्रयज्यवो मरुतो भ्राजदृष्टय इति मारुतं समानोदर्कं समानोदर्कं वा
एतदहरेतस्याह्नो रूपम् । जातवेदसे सुनवाम सोममिति जातवेद-

स्यां पुरस्तात्सूक्तस्य शंसति स्वस्त्ययनं वै जातवेदस्यां स्वस्तितायै स्वस्त्ययनमेव तत्कुरुते । इमं स्तोममर्हते जातवेदस इति जातवेदस्यं समानोदर्कं समानोदर्कं वा एतदहरेतस्याह्नो रूपमह्नो रूपम् ३

इत्यैतरेयप्रथमारण्यके पञ्चमोऽध्यायः
इति प्रथमारण्यकं समाप्तम्

## अथ द्वितीयारण्यकम्

एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यम् । तस्मान्न प्रमाद्येत्तन्नातीयात् । न ह्यन्यायन्पूर्वे येऽत्यायंस्ते पराबभूवुः । तदुक्तमृषिणा । प्रजा ह तिस्रो अत्यायमीयुर्न्यन्या अर्कमभितो विविश्रे । बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेशेति ॥ प्रजा ह तिस्रो अत्यायमीयुरिति या वै ता इमाः प्रजास्तिस्रो अत्यायमायं स्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः । न्यन्या अर्कमभितो विविश्र इति ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम् । बृहद्ध तस्थौ भुवनेष्वन्तरित्यद् उ एव बृहद्भुवनेष्वन्तरसावादित्यः । पवमानो हरित आ विवेशेति वायुरेव पवमानो दिशो हरित आविष्टः १

उक्थ्यमुक्थ्यमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च । तस्याग्निरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । अन्तरिक्षमेवोक्थमन्तरिक्षं वा अनु पतन्त्यन्तरिक्षमनु धावयन्ति तस्य वायुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । असावेव द्यौरुक्थममुतः प्रदानाद्धीदं सर्वमुत्तिष्ठति यदिदं किञ्च तस्यासावादित्योऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । इत्यधिदैवतम् । अथाध्यात्मम् । पुरुष एवोक्थमयमेव महान्प्रजापतिरहमुक्थमस्मीति विद्यात् । तस्य मुखमेवोक्थं यथा पृथिवी तथा । तस्य वागर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । नासिके एवोक्थं यथान्तरिक्षं तथा । तस्य प्राणोऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । तदेतद्ब्रह्मस्य विष्टयं यदेतन्नासिकायै विनतमिव । ललाटमेवोक्थं यथा द्यौस्तथा

। तस्य चत्तुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । समानमशीतयो-ऽध्यात्मं चाधिदैवतं चान्नमेवान्नेन हीमानि सर्वाणि भूतानि समनन्तीँ३ अन्नेनेमं लोकं जयत्यन्नेनामुं तस्मात्समानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेव । तदिदमन्नमन्नादमियमेव पृथिवीतो हिदं सर्वमुत्तिष्ठति यदिदं किञ्च । यद्ध किञ्चेदं प्रेर्ता३इ तदसौ सर्वमत्ति यदु किञ्चातः प्रैतीँ ३ तदियं सर्वमत्ति सेयमित्याद्यात्री । अत्ता ह वा आद्यो भवति । न तस्येशे यन्नाद्याद्यद्वैनं नाद्युः २

अथातो रेतसः सृष्टिः । प्रजापते रेतो देवा देवानां रेतो वर्षं वर्षस्य रेत ओषधय ओषधीनां रेतोऽन्नमन्नस्य रेतो रेतो रेतसो रेतः प्रजाः प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसो रेतो वाग्वाचो रेतः कर्म तदिदं कर्म कृतमयं पुरुषो ब्रह्मणो लोकः । स इरामयो यद्धीरामयस्तस्माद्धिर-गमयः । हिरगमयो ह वा अमुष्मिँल्लोके संभवति हिरगमयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद ३

तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपदे तस्मात्प्रपदे इत्याचत्तते शफाः खुरा इत्यन्येषां पशूनाम् । तदूर्ध्वमुदसर्पत्ता ऊरू अभवताम् । उरु गृणीहीत्यब्रवीत्तदुदरमभवत् । उर्वेव मे कुर्वित्यब्रवीत्तदुरोऽभवत् । उदरं ब्रह्मेति शार्कराद्त्या उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्माहैव ता३इ । ऊर्ध्वं त्वेवोदसर्प-त्तच्छिरोऽश्रयत यच्छिरोऽश्रयत तच्छिरोऽभवत्तच्छिरसः शिरस्त्वम् । ता एताः शीर्षञ्छ्रियः श्रिताश्चत्तुः श्रोत्रं मनो वाक्प्राणः । श्रयन्ते-ऽस्मिञ्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद । ता अहिंसन्ताह-मुक्थमस्म्यहमुक्थमस्मीति । ता अब्रुवन्हन्तास्माच्छरीरादुत्क्रामाम तद्यस्मिन्न उत्क्रान्त इदं शरीरं पत्स्यति तदुक्थं भविष्यतीति । वा-गुदक्रामदवदन्नश्नन्पिबन्नास्तैव । चत्तुरुदक्रामदपश्यन्नश्नन्पिबन्ना-स्तैव । श्रोत्रमुदक्रामदशृगवन्नश्नन्पिबन्नास्तैव । मन उदक्रामन्मी-लित इवाश्नन्पिबन्नास्तैव । प्राण उदक्रामत्तत्प्राण उत्क्रान्तेऽपद्यत ।

तदशीर्यताशारीर्तीँ३ तच्छरीरमभवत्तच्छरीरस्य शरीरत्वम् । शी-र्यते ह वा अस्य द्विषन्पाप्मा भ्रातृव्यः परास्य द्विषन्पाप्मा भ्रातृव्यो भ-वति य एवं वेद । ता अहिंसन्तैवाहमुक्थमस्म्यहमुक्थमस्मीति । ता अब्रुवन्हन्तेदं पुनः शरीरं प्रविशाम तद्यस्मिन्नः प्रपन्न इदं शरीरमु-त्थास्यति तदुक्थं भविष्यतीति । वाक्प्राविशदशयदेव । चक्षुः प्राविशदशयदेव । श्रोत्रं प्राविशदशयदेव । मनः प्राविशदशयदेव । प्राणः प्राविशत्तत्प्राणे प्रपन्न उदतिष्ठत्तदुक्थमभवत् । तदेतदुक्थाँ३ प्राण एव । प्राण उक्थमित्येव विद्यात् । तं देवा अब्रुवंस्त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्मस्त्वमस्माकमसीति । तदप्येतदृ-षिणोक्तम् । त्वमस्माकं तव स्मसीति ४

तं देवाः प्राणयन्त स प्रणीतः प्रातायत प्रातायीर्तीँ ३ तत्प्रातरभवत्स-मागादिर्तीँ ३ तत्सायमभवदहरेव प्राणो रात्रिरपानः । वागग्निश्चक्षुर-सावादित्यश्चन्द्रमा मनो दिशः श्रोत्रं स एष प्रहितां संयोगोऽध्यात्म-मिमा देवता अद उ आविरधिदैवतमित्येतत्तदुक्तं भवति । एतद्ध स्म वै तद्विद्वानाह हिरण्यदन्वैदो न तस्येशे यन्मह्यं न दद्युरिति प्रहितां वा अहमध्यात्मं संयोगं निविष्टं वेदैतद्ध तत् । अनीशानानि ह वा अ-स्मै भूतानि बलिं हरन्ति य एवं वेद । तत्सत्यं सदिति प्राणस्तीत्यन्नं यमित्यसावादित्यस्तदेतत्त्रिवृत्त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति । स यदि ह वा अपि मृषा वदति सत्यं हैवास्योदितं भवति य एवमेतत्सत्यस्य सत्यत्वं वेद ५

तस्य वाक्तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितं सर्वं हीदं नामनीँ ३ सर्वं वाचाभिवदति । वहन्ति ह वा एनं तन्तिसंबद्धा य एवं वेद । तस्योष्णिग्लोमानि त्वग्गायत्री त्रि-ष्टुम्मांसमनुष्टुप्स्नावान्यस्थि जगती पङ्क्तिर्मज्जा प्राणो बृहती स छन्दो-भिश्छन्नो यच्छन्दोभिश्छन्नस्तस्माच्छन्दांसीत्याचक्षते । छादयन्ति ह वा एनं छन्दांसि पापात्कर्मणो यस्यां कस्याञ्चिद्दिशि कामयते य ए-

वमेतच्छन्दसां छन्दस्त्वं वेद । तदुक्तमृषिणा । अपश्यं गोपामि-
त्येष वै गोपा एष हीदं सर्वं गोपायति । अनिपद्यमानमिति न ह्येष
कदाचन संविशति । आ च परा च पथिभिश्चरन्तमित्या च ह्येष परा
च पथिभिश्चरति । स सध्रीचीः स विषूचीर्वसान इति सध्रीचीश्च ह्येष
विषूचीश्च वस्त इमा एव दिशः । आ वरीवर्त्ति भुवनेष्वन्तरित्येष
ह्यन्तर्भुवनेष्वावरीवर्त्ति । अथो आवृतासोऽवतासो न कर्तृभिरिति ।
सर्वं हीदं प्राणेनावृतम् । सोऽयमाकाशः प्राणेन बृहत्या
विष्टब्धस्तद्यथायमाकाशः प्राणेन बृहत्या विष्टब्ध एवं सर्वाणि भूता-
न्यापिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीत्येवं विद्यात् ६

अथातो विभूतयोऽस्य पुरुषस्य । तस्य वाचा सृष्टौ पृथिवी चाग्नि-
श्चास्यामोषधयो जायन्तेऽग्निरेनाः स्वदयतीदमाहरतेदमाहरतेत्येवमेतौ
वाचं पितरं परिचरतः पृथिवी चाग्निश्च । यावदनु पृथिवी यावद-
न्वग्निस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेत-
योर्न जीर्यते पृथिव्याश्चाग्नेश्च य एवमेतां वाचो विभूतिं वेद । प्राणेन
सृष्टावन्तरिक्षं च वायुश्चान्तरिक्षं वा अनु चरन्त्यन्तरिक्षमनु शृण्वन्ति
वायुरस्मै पुण्यं गन्धमावहत्येवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षं च
वायुश्च । यावदन्वन्तरिक्षं यावदनु वायुस्तावानस्य लोको भवति नास्य
तावल्लोको जीर्यते यावदेतयोर्न जीर्यते ऽन्तरिक्षस्य च वायोश्च य
एवमेतां प्राणस्य विभूतिं वेद । चक्षुषा सृष्टौ द्यौश्चादित्यश्च द्यौर्हास्मै
वृष्टिमन्नाद्यं संप्रयछत्यादित्योऽस्य ज्योतिः प्रकाशं करोत्येवमेतौ चक्षुः
पितरं परिचरतो द्यौश्चादित्यश्च । यावदनु द्यौर्यावदन्वादित्यस्तावा-
नस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते
दिवश्चादित्यस्य च य एवमेतां चक्षुषो विभूतिं वेद । श्रोत्रेण सृष्टा
दिशश्च चन्द्रमाश्च दिग्भ्यो हैनमायन्तीँ३ दिग्भ्यो विशृणोति चन्द्रमा अस्मै
पूर्वपक्षापरपक्षान्विचिनोति पुण्याय कर्मण एवमेते श्रोत्रं पितरं
परिचरन्ति दिशश्च चन्द्रमाश्च । यावदनु दिशो यावदनु चन्द्रमास्ता-
वानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यते

दिशां च चन्द्रमसश्च य एवमेतां श्रोत्रस्य विभूतिं वेद । मनसा सृष्टा अ्रापश्च वरुणश्चापो हास्मै श्रद्धां संनमन्ते पुणयाय कर्मणे वरुणोऽस्य प्रजां धर्मेण दाधारैवमेते मनः पितरं परिचरन्त्यापश्च वरुणश्च । यावदन्वापो यावदनु वरुणस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यतेऽपां च वरुणस्य च य एवमेतां मनसो विभूतिं वेद ७

अ्रापा३ इत्याप इति तदिदमाप एवेदं वै मूलमदस्तूलमयं पितैते पुत्रा यत्र ह क्व च पुत्रस्य तत्पितुर्यत्र वा पितुस्तद्वा पुत्रस्येत्येतत्तदुक्तं भवति । एतद्ध स्म वै तद्विद्वानाह महिदासऐतरेय अ्राहं मां देवेभ्यो वेद अ्रो मद्देवान्वेदेतःप्रदाना ह्येत इतः संभृता इति । स एष गिरिश्चक्षुः श्रोत्रं मनो वाक्प्राणस्तं ब्रह्मगिरिरित्याचक्षते । गिरति ह वै द्विषन्तं पाप्मानं भ्रातृव्यं परास्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद । स एषोऽसुः स एष प्राणः स एष भूतिश्चाभूतिश्च । तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भुरित्येव प्रश्वसिति । अ्रभूतिरि- त्यसुरास्ते ह पराबभूवुः । भवत्यात्मना परास्य द्विषन्पाप्मा भ्रातृव्यो भवति य एवं वेद । स एष मृत्युश्चैवामृतं च । तदुक्तमृषिणा । अ्रपाङ्प्राङेति स्वधया गृभीत इत्यपानेन ह्ययं यतः प्राणो न पराङ्भवति । अ्रमर्त्यो मर्त्येना सयोनिरित्येतेन हीदं सर्वं सयोनि मर्त्यानि हीमानि शरीराणीँ३ अ्रमृतैषा देवता । ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न नि चिक्युरन्यमिति निचिन्वन्ति हैवेमानि शरीराणीँ३ अ्रमृतैवैषा देवता । अ्रमृतो ह वा अ्रमुष्मिँल्लोके संभवत्यमृतः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद य एवं वेद

इत्यैतरेयद्वितीयारगयके प्रथमोऽध्यायः

एष इमं लोकमभ्यार्चत्पुरुषरूपेण य एष तपति प्राणो वाव तदभ्या- र्चत्प्राणो ह्येष य एष तपति । तं शतं वर्षागयभ्यार्चत्तस्माच्छतं व- र्षाणि पुरुषायुषो भवन्ति तं यच्छतं वर्षागयभ्यार्चत्तस्माच्छतर्चिनस्त-

स्माच्छतर्चिन इत्याचक्षत एतमेव सन्तम् । स इदं सर्वं मध्यतो दधे यदिदं किञ्च स यदिदं सर्वं मध्यतो दधे यदिदं किञ्च तस्मान्माध्यमास्तस्मान्माध्यमा इत्याचक्षत एतमेव सन्तम् । प्राणो वै गृत्सोऽपानो मदः स यत्प्राणो गृत्सोऽपानो मदस्तस्माद्गृत्समदस्तस्माद्गृत्समद इत्याचक्षत एतमेव सन्तम् । तस्येदं विश्वं मित्रमासीद्यदिदं किञ्च तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किञ्च तस्माद्विश्वामित्रस्तस्माद्विश्वामित्र इत्याचक्षत एतमेव सन्तम् । तं देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तस्माद्वामदेवस्तस्माद्वामदेव इत्याचक्षत एतमेव सन्तम् । स इदं सर्वं पाप्मनोऽत्रायत यदिदं किञ्च स यदिदं सर्वं पाप्मनो ऽत्रायत यदिदं किञ्च तस्मादत्रयस्तस्मादत्रय इत्याचक्षत एतमेव सन्तम् १

एष उ एव बिभ्रद्वाजः प्रजा वै वाजस्ता एष बिभर्ति यद्बिभर्ति तस्माद्भरद्वाजस्तस्माद्भरद्वाज इत्याचक्षत एतमेव सन्तम् । तं देवा अब्रुवन्नयं वै नः सर्वेषां वसिष्ठ इति तं यद्देवा अब्रुवन्नयं वै नः सर्वेषां वसिष्ठ इति तस्माद्वसिष्ठस्तस्माद्वसिष्ठ इत्याचक्षत एतमेव सन्तम् । स इदं सर्वमभिप्रागाद्यदिदं किञ्च स यदिदं सर्वमभिप्रागाद्यदिदं किञ्च तस्मात्प्रगाथास्तस्मात्प्रगाथा इत्याचक्षत एतमेव सन्तम् । स इदं सर्वमभ्यपवयत यदिदं किञ्च स यदिदं सर्वमभ्यपवयत यदिदं किञ्च तस्मात्पावमान्यस्तस्मात्पावमान्य इत्याचक्षत एतमेव सन्तम् । सोऽब्रवीदहमिदं सर्वमसानि यच्च क्षुद्रं यच्च महदिति ते क्षुद्रसूक्ताश्चाभवन्महासूक्ताश्च तस्मात्क्षुद्रसूक्तास्तस्मात्क्षुद्रसूक्ता इत्याचक्षत एतमेव सन्तम् । सूक्तं वतावोचतेति तत्सूक्तमभवत्तस्मात्सूक्तं तस्मात्सूक्तमित्याचक्षत एतमेव सन्तम् । एष वा ऋगेष ह्येभ्यः सुर्वेभ्यो भूतेभ्योऽर्चत स यदेभ्यः सर्वेभ्यो भूतेभ्योऽर्चत तस्मादृक्तस्मादृगित्याचक्षत एतमेव सन्तम् । एष वा अर्धर्च एष ह्येभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत स यदेभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत तस्मादर्धर्चस्तस्मादर्धर्च इत्याचक्षत एतमेव सन्तम् । एष वै पदमेष हीमानि सर्वाणि भूतानि पादि स

यदिमानि सर्वाणि भूतानि पादि तस्मात्पदं तस्मात्पदमित्याचक्षत एतमेव सन्तम् । एष वा अक्षरमेष ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति स यदेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति तस्मादक्षरं तस्मादक्षरमित्याचक्षत एतमेव सन्तम् । ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात् २

विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषसाद । स हान्नमित्य-भिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय । तमि-न्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे द्वितीयं शंसेति । स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामो-पेयाय । तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे तृ-तीयं शंसेति । स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस ते-नेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच ऋषे प्रियं वै मे धामो-पागा वरं ते ददामीति । स होवाच त्वामेव जानीयामिति । त-मिन्द्र उवाच प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि तस्य मेऽन्नं मित्रं दक्षिणं तद्वैश्वामित्रमेष तपन्नेवास्मीति होवाच ३

तद्वा इदं बृहतीसहस्रं संपन्नं तस्य यानि व्यञ्जनानि तच्छरीरं यो घोषः स आत्मा य ऊष्माणः स प्राणः । एतद्ध स्म वै तद्विद्वान्वसिष्ठो व-सिष्ठो बभूव तत एतन्नामधेयं लेभे । एतदु हैवेन्द्रो विश्वामित्राय प्रो-वाचैतदु हैवेन्द्रो भरद्वाजाय प्रोवाच तस्मात्स तेन बन्धुना यज्ञेषु हूयते । तद्वा इदं बृहतीसहस्रं संपन्नं तस्य वा एतस्य बृहतीसहस्रस्य संप-न्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति शतसंवत्सर-स्याह्नां सहस्राणि भवन्ति व्यञ्जनैरेव रात्रीराप्नुवन्ति स्वरैरहानि । तद्वा इदं बृहतीसहस्रं संपन्नं तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य परस्तात्प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति य

एवं वेद । तद्योऽहं सोऽसौ योऽसौ सोऽहम् । तदुक्तमृषिणा । सूर्य आत्मा जगतस्तस्थुषश्चेति । एतदु हैवोपेक्षेतोपेक्षेत ४
इत्यैतरेयद्वितीयारण्यके द्वितीयोऽध्यायः

यो ह वा आत्मानं पञ्चविधमुक्थं वेद यस्मादिदं सर्वमुत्तिष्ठति स संप्रतिवित् । पृथिवी वायुराकाश आपो ज्योतींषीत्येष वा आत्मोक्थं पञ्चविधमेतस्माद्धीदं सर्वमुत्तिष्ठत्येतमेवाप्येति । अयनं ह वै समानानां भवति य एवं वेद । तस्मिन्योऽन्नं चान्नादं च वेदाहास्मिन्नन्नादो जायते भवत्यस्यान्नम् । आपश्च पृथिवी चान्नमेतन्मयानि ह्यन्नानि भवन्ति ज्योतिश्च वायुश्चान्नादमेताभ्यां हीदं सर्वमन्नमत्त्यावपनमाकाश आकाशे हीदं सर्वं समोप्यते । आवपनं ह वै समानानां भवति य एवं वेद । तस्मिन्योऽन्नं चान्नादं च वेदाहास्मिन्नन्नादो जायते भवत्यस्यान्नम् । ओषधिवनस्पतयोऽन्नं प्राणभृतोऽन्नादमोषधिवनस्पतीन्हि प्राणभृतोऽदन्ति । तेषां य उभयतोदन्ताः पुरुषस्यानु विधां विहितास्तेऽन्नादा अन्नमितरे पशवस्तस्मात्त इतरान्पशूनधीव चरन्त्यधीव ह्यन्नेऽन्नादो भवति । अधीव ह समानानां जायते य एवं वेद १

तस्य य आत्मानमाशिवस्तरां वेदाश्नुते हाविर्भूयः । ओषधिवनस्पतयो यच्च किञ्च प्राणभृत्स आत्मानमाविस्तरां वेद । ओषधिवनस्पतिषु हि रसो दृश्यते चित्तं प्राणभृत्सु । प्राणभृत्सु त्वेवाविस्तरामात्मा तेषु हि रसोऽपि दृश्यते न चित्तमितरेषु । पुरुषे त्वेवाविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नः । अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकौ त एतावन्तो भवन्ति यथाप्रज्ञं हि संभवाः २

स एष पुरुषः समुद्रः सर्वं लोकमति । यद्ध किञ्चाश्नुतेऽत्येनं मन्यते

यद्यन्तरिक्षलोकमश्नुतेऽत्येनं मन्यते यद्यमुं लोकमश्नुवीतात्येवैनं मन्येत । स एष पुरुषः पञ्चविधस्तस्य यदुष्णं तज्ज्योतिर्यानि खानि स आकाशोऽथ यल्लोहितं श्लेष्मा रेतस्ता आपो यच्छरीरं सा पृथिवी यः प्राणः स वायुः । स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः । ता एता देवताः प्राणापानयोरेव निविष्टाश्चक्षुः श्रोत्रं मनो वागिति प्राणस्य ह्यन्वपायमेता अपियन्ति । स एष वाचश्चित्तस्यो-त्तरोत्तरिक्रमो यद्यज्ञः । स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः । स एष यज्ञानां संपन्नतमो यत्सोम एतस्मि-न्हेताः पञ्चविधा अधिगम्यन्ते यत्प्राक्सवनेभ्यः सैकाविधा त्रीणि सवनानि यदूर्ध्वं सा पञ्चमी ३

यो ह वै यज्ञे यज्ञं वेदाहन्यहर्देवेषु देवमध्यूळ्हं स संप्रतिवित् । एष वै यज्ञे यज्ञोऽहन्यहर्देवेषु देवोऽध्यूळ्हो यदेतन्महदुक्थम् । तदेतत्प-ञ्चविधं त्रिवृत्पञ्चदशं सप्तदशमेकविंशं पञ्चविंशमिति स्तोमतो गायत्रं रथन्तरं बृहद्भद्रं राजनमिति सामतो गायत्र्युष्णिग्बृहती त्रिष्टुब्द्विपदेति छन्दस्तः शिरो दक्षिणः पक्ष उत्तरः पक्षः पुछमात्मेत्याख्यानम् । पञ्चकृत्वः प्रस्तौति पञ्चकृत्व उद्गायति पञ्चकृत्वः प्रतिहरति पञ्चकृत्व उपद्रवति पञ्चकृत्वो निधनमुपयन्ति तत्स्तोभसहस्रं भवति । एवं ह्येताः पञ्च विधा अनुशस्यन्ते यत्प्राक्तृचाशीतिभ्यः सैका विधा ति-स्रस्तृचाशीतयो यदूर्ध्वं सा पञ्चमी । तदेतत्सहस्रं तत्सर्वं तानि दश दशेति वै सर्वमेतावती हि संख्या दश दशतस्तच्छतं दशशतानि त-त्सहस्रं तत्सर्वम् । तानि त्रीणि छन्दांसि भवन्ति त्रेधा विहितं वा इदमन्नमशनं पानं खादस्तदेतैराप्नोति ४

तद्वा इदं बृहतीसहस्रं संपन्नम् । तद्धैतदेके नानाछन्दसां सहस्रं प्र-तिजानते किमन्यत्सदन्यद्ब्रूयामेति । त्रिष्टुप्सहस्रमेके जगतीसह-स्रमेकेऽनुष्टुप्सहस्रमेके । तदुक्तमृषिणा । अनुष्टुभमनु चर्चूर्यमाण-मिन्द्रं नि चिक्युः कवयो मनीषेति । वाचि वै तदैन्द्रं प्राणं न्यचाय-

न्नित्येतत्तदुक्तं भवति । स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोरीश्व-
रो ह तु पुरायुषः प्रैतोरिति ह स्माहाकृत्स्नो ह्येष आत्मा यद्वागभि हि
प्राणेन मनसेऽस्यमानो वाचा नानुभवति । बृहतीमभिसंपादयेदेष वै
कृत्स्न आत्मा यद्बृहती । सोऽयमात्मा सर्वतः शरीरैः परिवृतस्तद्य-
थायमात्मा सर्वतः शरीरैः परिवृत एवमेव बृहती सर्वतश्छन्दोभिः
परिवृता । मध्यं ह्येषामङ्गानामात्मा मध्यं छन्दसां बृहती । स हे-
श्वरो यशस्वी कल्याणकीर्तिर्भवितोरीश्वरो ह तु पुरायुषः प्रैतोरिति ह
स्माह कृत्स्नो ह्येष आत्मा यद्बृहती तस्माद्बृहतीमेवाभिसंपादयेत् ५

तद्वा इदं बृहतीसहस्रं संपन्नं तस्य वा एतस्य बृहतीसहस्रस्य संपन्न-
स्यैकादशानुष्टुभां शतानि भवन्ति पञ्चविंशतिश्चानुष्टुभ आत्तं वै भूयसा
कनीयः । तदुक्तमृषिणा । वाचमष्टामदीमहमित्यष्टौ हि चतुरक्ष-
राणि भवन्ति । नवस्रक्तिमिति बृहती संपद्यमाना नवस्रक्तिः ।
ऋतस्पृशमिति सत्यं वै वागृचा स्पृष्टा । इन्द्रात्परि तन्वं मम इति
तद्यदेवैतद्बृहतीसहस्रमनुष्टुप्संपन्नं भवति तस्मात्तदैन्द्रात्प्राणाद्बृहत्यै वा-
चमनुष्टुभं तन्वं संनिर्मिमीते । स वा एष वाचः परमो विकारो य-
देतन्महदुक्थं तदेतत्पञ्चविधं मितममितं स्वरः सत्यानृते इति । ऋ-
ग्गाथा कुम्ब्या तन्मितं यजुर्निगदो वृथावाक्तदमितं सामाथो यः कश्च
गेष्णः सः स्वर ओ३मिति सत्यं नेत्यनृतम् । तदेतत्पुष्पं फलं वाचो
यत्सत्यं स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः पुष्पं हि फलं वाचः
सत्यं वदति । अथैतन्मूलं वाचो यदनृतं तद्यथा वृक्ष आविर्मूलः शुष्य-
ति स उद्वर्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स
उद्वर्तते । तस्मादनृतं न वदेद्दयेत त्वेनेन । पराग्वा एतद्रिक्तमक्षरं
यदेतदो३मिति तद्यत्किञ्चोमित्याहात्रैवास्मै तद्रिच्यते स यत्सर्वमों
कुर्याद्रिञ्चयादात्मानं स कामेभ्यो नालं स्यात् । अथैतत्पूर्णमभ्यात्मं
यन्नेति । स यत्सर्वं नेति ब्रूयात्पापिकास्य कीर्तिर्जायेत सैनं तत्रैव
हन्यात् । तस्मात्काल एव दद्यात्काले न दद्यात्तत्सत्यानृते मिथुनी-
करोति तयोर्मिथुनात्प्रजायते भूयान्भवति । यो वै तां वाचं वेद यस्या

एष विकारः स संप्रतिवित् । अकारो वै सर्वा वाक्सैषा स्पर्शोष्म-भिर्व्यज्यमाना बह्वी नानारूपा भवति । तस्यै यदुपांशु स प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात्तत्तिर इव तिर इव ह्यशरीरमशरीरो हि प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात्तदाविराविर्हि शरीरम् ६

तद्वा इदं बृहतीसहस्रं संपन्नं तद्यशः स इन्द्रः स भूतानामधिपतिः । स य एवमेतमिन्द्रं भूतानामधिपतिं वेद विस्रसा हैवास्माल्लोकात्प्रैतीति ह स्माह महिदास ऐतरेयः प्रेत्येन्द्रो भूत्वैषु लोकेषु राजति । तदाहुर्यदनेन रूपेणामुं लोकमभिसंभवतीँ ३ अथ केन रूपेणेमं लोक-माभवतीँ ३ । तद्यदेतत्स्त्रियां लोहितं भवत्यग्नेस्तद्रूपं तस्मात्तस्मान्न बीभत्सेताथ यदेतत्पुरुषे रेतो भवत्यादित्यस्य तद्रूपं तस्मात्तस्मान्न बीभत्सेत । सोऽयमात्मेममात्मानममुष्मा आत्मने संप्रयछत्यसावा-त्मामुमात्मानमिमस्मा आत्मने संप्रयछति तावन्योन्यमभिसंभवतोऽने-नाह रूपेणामुं लोकमभिसंभवत्यमुनो रूपेणेमं लोकमाभवति ७

तत्रैते श्लोकाः ।
यदक्षरं पञ्चविधं समेति । युजो युक्ता अभि यत्संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते । तत्र देवाः सर्व एकं भवन्ति १
यदक्षरादक्षरमेति युक्तम् । युजो युक्ता अभि यत्संवहन्ति ।
सत्यस्य सत्यमनु यत्र युज्यते । तत्र देवाः मर्व एकं भवन्ति २
यद्वाच ओमिति यच्च नेति । यच्चास्याः क्रूरं यदु चोल्बणिष्णु ।
तद्वियूया कवयो अन्वविन्दन् । नामायत्ता समतृप्यञ्छ्रुतेऽधि ३
यस्मिन्नामा समतृप्यञ्छ्रुतेऽधि । तत्र देवाः सर्वयुजो भवन्ति ।
तेन पाप्मानमपहत्य ब्रह्मणा । स्वर्गं लोकमप्येति विद्वान् ४
नैनं वाचा स्त्रियं ब्रुवन् । नैनमस्त्रीपुमान्ब्रुवन् ।
पुमांसं न ब्रुवन्नेनम् । वदन्वदति कश्चन ५

अ इति ब्रह्म तत्रागतमहमिति । तद्वा इदं बृहतीसहस्रं संपन्नं तस्य

वा एतस्य बृहतीसहस्रस्य संपन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति । जीवाक्षरेणैव जीवाहराप्नोति जीवाह्ना जीवाक्षरमिति । अनकाममारोऽथ देवरथस्तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः संग्रहीता तदयं प्राणोऽधितिष्ठति । तदुक्तमृषिणा । आ तेन यातं मनसो जवीयसा निमिषश्चिज्जवीयसेति जवीयसेति ८

इत्यैतरेयद्वितीयारण्यके तृतीयोऽध्यायः

आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत् । स ईक्षत । लोकान्नु सृजा इति । स इमाँल्लोकानसृजत । अम्भो मरीचीर्मरमापः । अदोऽम्भः परेण दिवं द्यौः प्रतिष्ठान्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः । स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति । सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्छयत् । तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डं मुखाद्वाग्वाचोऽग्निः । नसिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुः । अक्षिणी निरभिद्येतामक्षीभ्यां चक्षुश्चक्षुष आदित्यः । कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशः । त्वङ्निरभिद्यत त्वचा लोमानि लोमभ्य ओषधिवनस्पतयः । हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमाः । नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः । शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः १

ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतंस्तमशनापिपासाभ्यामन्ववार्जत् । ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रतिष्ठिता अन्नमदामेति । ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति । ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति । ताभ्यः पुरुषमानयत्ता अब्रुवन्सुकृतं वतेति पुरुषो वाव सुकृतं । ता अब्रवीद्यथायतनं प्रविशतेति । अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भू-

त्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन् । तमशनापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति । तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापि-पासे भवतः २

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति ।
सोऽपोऽभ्यतपत्ताभ्योऽभितप्ताभ्यो मूर्तिरजायत ।
या वै सा मूर्तिरजायतान्नं वै तत् ।
तदेनत्सृष्टं पराङ्त्यजिगांसत्तद्वाचाजिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुम् ।
स यद्धैनद्वाचाग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् ।
तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेन ग्रहीतुम् ।
स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् ।
तच्चक्षुषाजिघृक्षत्तन्नाशक्नोच्चक्षुषा ग्रहीतुम् ।
स यद्धैनच्चक्षुषाग्रहैष्यद्दृष्ट्वा हैवान्नमत्रप्स्यत् ।
तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम् ।
स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् ।
तत्त्वचाजिघृक्षत्तन्नाशक्नोत्त्वचा ग्रहीतुम् ।
स यद्धैनत्त्वचाग्रहैष्यत्स्पृष्ट्वा हैवान्नमत्रप्स्यत् ।
तन्मनसाजिघृक्षत्तन्नाशक्नोन्मनसा ग्रहीतुम् ।
स यद्धैनन्मनसाग्रहैष्यद्ध्यात्वा हैवान्नमत्रपस्यत् ।
तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन ग्रहीतुम् ।
स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत् । तदपानेनाजिघृ-क्षत्तदावयत् । सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः । स ईक्षत कथं न्विदं मदृते स्यादिति । स ईक्षत कतरेण प्रपद्या इति । स ईक्षत यदि वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति । स एतमेव सीमानं विदार्यैतया द्वारा

प्रापद्यत । सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनम् । तस्य त्रय आवसथा-स्त्रयः स्वप्ना अयमावसथोऽयमावसथोऽयमावसथ इति । स जातो भूतान्यभिव्यैक्षत्किमिहान्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्म ततममपश्यत् । इदमदर्शमितीँ३ । तस्मादिदंद्रो नामेदंद्रो ह वै नाम तमिदंद्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः । परोक्षप्रिया इव हि देवाः ३

इत्यैतरेयद्वितीयारण्यके चतुर्थोऽध्यायः

पुरुषे ह वा अयमादितो गर्भो भवति । यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गे-भ्यस्तेजः संभूतमात्मन्येवात्मानं भ्भर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्ज-नयति । तदस्य प्रथमं जन्म । तत्स्त्रिया आत्मभूयं गछति यथा स्वमङ्गं तथा । तस्मादेनां न हिनस्ति । सास्यैतमात्मानमत्र गतं भावयति सा भावयित्री भावयितव्या भवति । तं स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति । स यत्कुमारं जन्मनो-ऽग्रेऽधिभावयत्यात्मानमेव तद्भावयति । एषां लोकानां संतत्या एवं संतता हीमे लोकाः । तदस्य द्वितीयं जन्म । सोऽस्यायमात्मा पु-ण्येभ्यः कर्मभ्यः प्रतिधीयते । अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति । स इतः प्रयन्नेव पुनर्जायते । तदस्य तृतीयं जन्म । तदुक्तमृषिणा । गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा । शतं मा पुर आयसीररक्षन्नध श्येनो जवसा निरदीयमिति । गर्भ एवैतच्छयानो वामदेव एवमुवाच । स एवं विद्वानस्मा-च्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वामृतः समभवत्समभवत् ।

इत्यैतरेयद्वितीयारण्यके पञ्चमोऽध्यायः

कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा । येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति । यदेतद्धृदयं मनश्चैतत्संज्ञानमाज्ञानं

विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति । सर्वाणयेवैतानि प्रज्ञानस्य नामधेयानि भवन्ति । एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म । स एतेन प्रज्ञेनात्मनास्माँल्लोकादुत्क्रम्यामुष्मि-न्स्वर्गे लोके सर्वान्कामानाप्त्वामृतः समभवत्समभवत् ।

इत्यैतरेयद्वितीयारगयके षष्ठोऽध्यायः

वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेद-स्य म आणी स्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान्संदधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम् ।

इत्यैतरेयद्वितीयारगयके सप्तमोऽध्यायः

द्वितीयारगयकं समाप्तं

## अथ तृतीयारगयकम्

अथातः संहिताया उपनिषत् । पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहितेति माण्डूकेय आकाशः संहितेत्यस्य माक्षव्यो वेदयाञ्चक्रे । स हाविपरिहृतो मेने न मेऽस्य पुत्रेण समगादिति । समाने वै तत्परिहृतो मेन इत्यागस्त्यः समानं ह्येतद्भवति वायुश्चाकाशश्च । इत्यधिदैवतम् । अथाध्यात्मम् । वाक्पूर्वरूपं मन उत्तररूपं प्राणः संहितेति शूरवीरो माण्डूकेयः । अथ हास्य पुत्र आह ज्येष्ठो मनः पूर्वरूपं वागुत्तररूपं मनसा वा अग्रे संकल्पयत्यथ वाचा व्याहरति तस्मान्मन एव पूर्वरूपं वागुत्तररूपं प्राणस्त्वेव संहितेति । समानमेनयोरत्र पितुश्च पुत्रस्य च । स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहतः । स य एवमेतां

संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । इति नु माण्डुकेयानाम् १

अथ शाकल्यस्य । पृथिवी पूर्वरूपं द्यौरुत्तररूपं वृष्टिः संधिः पर्जन्यः संधाता । तदुतापि यत्रैतद्बलवदनुदृह्णन्संदधदहोरात्रे वर्षति द्यावापृथिव्यौ समधातामित्युताप्याहुः । इती न्वधिदैवतम् । अथाध्यात्मम् । पुरुषो ह वा अयं सर्व आन्दं द्वे बिदले भवत इत्याहुस्तस्येदमेव पृथिव्या रूपमिदं दिवस्तत्रायमन्तरेणाकाशो यथासौ द्यावापृथिव्यावन्तरेणाकाशः । तस्मिन्हास्मिन्नाकाशे प्राण आयत्तो यथामुष्मिन्नाकाशे वायुरायत्तः । यथामूनि त्रीणि ज्योतींष्येवमिमानि पुरुषे त्रीणि ज्योतींषि यथासौ दिव्यादित्य एवमिदं शिरसि चक्षुर्यथासावन्तरिक्षे विद्युदेवमिदमात्मनि हृदयं यथायमग्निः पृथिव्यामेवमिदमुपस्थे रेतः । एवमु ह स्म सर्वलोकमात्मानमनुविधायाहेदमेव पृथिव्या रूपमिदं दिवः । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति २

अथातो निर्भुजप्रवादाः । पृथिव्यायतनं निर्भुजं दिव्यायतनं प्रतृण्णमन्तरिक्षायतनमुभयमन्तरेण । अथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेदच्योष्टावराभ्यां स्थानाभ्यामित्येनं ब्रूयात् । अथ यद्येनं प्रतृणं ब्रुवन्तमुपवदेदच्योष्टा उत्तराभ्यां स्थानाभ्यामित्येनं ब्रूयात् । यस्त्वेवोभयमन्तरेणाह तस्य नास्त्युपवादः । यद्धि संधिं विवर्तयति तन्निर्भुजस्य रूपमथ यच्छुद्धे अक्षरे अभिव्याहरति तत्प्रतृणस्याग्र उ एवोभयमन्तरेणोभयं व्याप्तं भवति । अन्नाद्यकामो निर्भुजं ब्रूयात्स्वर्गकामः प्रतृणमुभयकाम उभयमन्तरेण । अथ यद्येनं निर्भुजं ब्रुवन्तं पर उपवदेत्पृथिवीं देवतामारः पृथिवी त्वा देवता रिष्यतीत्येनं ब्रूयात् । अथ यद्येनं प्रतृणं ब्रुवन्तं पर उपवदेद्दिवं देवतामारो द्यौस्त्वा देवता रिष्यतीत्येनं ब्रूयात् । अथ यद्येनमुभयमन्तरेण ब्रुवन्तं पर उपवदेदन्तरिक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिष्यतीत्येनं ब्रूयात् । यथा तु कथा च

ब्रु ब्रुवन्वा ब्रुवन्तं वा ब्रूयादभ्याशमेव यत्तथा स्यात् । न त्वेवान्य-
त्कुशलाद्ब्राह्मणं ब्रूयात् । अतिद्युम्न एव ब्राह्मणं ब्रूयात् । नातिद्युम्ने
चन ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति ह स्माह शूरवीरो माण्डू-
केयः ३

अथातोऽनुव्याहाराः । प्राणो वंश इति विद्यात् । स य एनं प्राणं वं-
शमुपवदेच्छक्नुवञ्चेन्मन्येत प्राणं वंशं समधाँ३ प्राणं मा वंशं संदधतं न
शक्नोषीत्याह प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयात् । अथ चेदशक्नुवन्तं
मन्येत प्राणं वंशं समधित्सिषं तं नाशकः संधातुं प्राणस्त्वा वंशो हास्य-
तीत्येनं ब्रूयात् । यथा तु कथा च ब्रुवन्वा ब्रुवन्तं वा ब्रूयादभ्याशमेव
यत्तथा स्यात् । न त्वेवान्यत्कुशलाद्ब्राह्मणं ब्रूयात् । अतिद्युम्न एव
ब्राह्मणं ब्रूयात् । नातिद्युम्ने चन ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति
ह स्माह शूरवीरो माण्डूकेयः ४

अथ खल्वाहुर्निर्भुजवक्त्राः । पूर्वमक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽव-
काशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति । स य एवमेतां संहितां
वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन
सर्वमायुरेति । अथ वयं ब्रूमो निर्भुजवक्त्रा इति ह स्माह ह्रस्वो माण्डू-
केयः पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे
अन्तरेण येन संधिं विवर्तयति येन स्वरास्वरं विजानाति येन मात्रामात्रां
विभजते सा संहितेति । स य एवमेतां संहितां वेद संधीयते प्रजया
पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । अथ हास्य
पुत्र आह मध्यमः प्रातीबोधीपुत्रोऽक्षरे खल्विमे अविकर्षन्ननेकी-
कुर्वन्यथावर्णमाह तद्यासौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण संधिविज्ञपनी
साम तद्भवति सामैवाहं संहितां मन्य इति । तदप्येतदृषिणोक्तम् ।
बृहस्पते न परः साम्नो विदुरिति । स य एवमेतां संहितां वेद संधीयते
प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ५

बृहद्रथन्तरयो रूपेण संहिता संधीयत इति तारुक्षयः । वाग्वै रथन्तरस्य रूपं प्राणो बृहत उभाभ्यामु खलु संहिता संधीयते वाचा च प्राणेन च । एतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षयते तारुक्षयः ॥ एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षयते तारुक्षयः । तदप्येतदृषिणोक्तम् । रथन्तरमा जभारा वसिष्ठो भरद्वाजो बृहदा चक्रे अग्नेरिति ॥ स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । वाक्प्राणेन संहितेति कौण्ठरव्यः प्राणः पवमा-नेन पवमानो विश्वैर्देवैर्विश्वे देवाः स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणा सैषावरपरा संहिता । स यो हैतामवरपरां संहितां वेदैवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन संधीयते यथैषा संहिता । स यदि परेण वोपसृतः स्वेन वार्थेनाभिव्याहरेदभिव्याहार्ष-न्नेव विद्याद्दिवं संहितागमद्विदुषां देवानामेवं भविष्यतीति । शश्वत्तथा स्यात् । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । वाक्संहितेति पञ्चालचण्डः । वाचा वै वेदाः संधीयन्ते वाचा छन्दांसि वाचा मित्राणि संदधति वाचा सर्वाणि भूतान्यथो वादेवेदं सर्वमिति । तद्यत्रैतदधीते वा भाषते वा वाचि तदा प्राणो भवति वाक्तदा प्राणं रेळ्ह्यथ यत्र तूष्णीं वा भवति स्वपिति वा प्राणे तदा वाग्भवति प्राणस्तदा वाचं रेळ्हि तावन्योन्यं रीळ्हो वाग्वै माता प्राणः पुत्रः । तदप्येतदृषिणोक्तम् । एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे । तं पाकेन मनसाप-श्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरमिति ॥ स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति । अथातः प्रजापतिसंहिता । जाया पूर्वरूपं पतिरुत्तररूपं पुत्रः संधिः प्रजननं संधानं सैषादितिः संहिता । अदितिर्हीदम् सर्वं यदिदं किञ्च पिता च माता च पुत्रश्च प्रजननं च । तदप्येतदृषिणोक्तम् । अदितिर्माता स पिता स पुत्र इति । स य एवमेतां संहितां वेद संधीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरे-ति सर्वमायुरेति ६

## इत्यैतरेयतृतीयारगयके प्रथमोऽध्यायः

प्राणो वंश इति स्थविरः शाकल्यः । तद्यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमस्मिन्प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितः । तस्यैतस्यात्मनः प्राण ऊष्मरूपमस्थीनि स्पर्शरूपं मज्ज्ञानः स्वररूपं मांसं लोहितमित्येतदन्यच्चतुर्थमन्तस्थारूपमिति ह स्माह ह्रस्वो माण्डूकेयः । त्रयं त्वेव न एतत्प्रोक्तम् । तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति त्रीणीतः षष्टिशतानि त्रीणीतस्तानि सप्त विंशतिशतानि भवन्ति सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः । स एषोऽहःसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मयः आत्मा । स य एवमेतमहः सम्मानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाह्नां सायुज्यं सरूपतां स लोकतामश्नुते पुत्री पशुमान्भवति सर्वमायुरेति १

अथ कौण्ठरव्यः । त्रीणि षष्टिशतान्यक्षराणां त्रीणि षष्टिशतान्यूष्मणां त्रीणि षष्टिशतानि संधीनाम् । यान्यक्षराण्यवोचामाहानि तानि यानूष्मणोऽवोचाम रात्रयस्ता यान्संधीनवोचामाहोरात्राणां ते संधय इत्यधिदैवतम् । अथाध्यात्मम् । यान्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्मम् । यानूष्मणोऽधिदैवतमवोचाम मज्ज्ञानस्तेऽध्यात्मम् । एष ह वै संप्रतिप्राणो यन्मज्ज्ञैतद्रेतो न ह वा ऋते प्राणाद्रेतः सिच्यते यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेन्न संभवेत् । यान्संधीनधिदैवतमवोचाम पर्वाणि तान्यध्यात्मम् । तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति पञ्चेतश्चत्वारिंशच्छतानि पञ्चेतस्तदशीतिसहस्रं भवत्यशीतिसहस्रं वा अर्कलिनो बृहतीरहरभिसंपादयन्ति । स एषोऽक्षरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा । स य एवमेतमक्षरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाक्षराणां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान्भवति सर्वमायुरेति २

चत्वारः पुरुषा इति बाध्वः शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापु-
रुष इति । शरीरपुरुष इति यमवोचाम स य एवायं दैहिक आत्मा
तस्य योऽयमशरीरः प्रज्ञात्मा स रसः । छन्दःपुरुष इति यमवोचामा-
क्षरसमाम्नाय एव तस्यैतस्याकारो रसः । वेदपुरुष इति यमवोचाम
येन वेदान्वेद ऋग्वेदं यजुर्वेदं सामवेदं तस्यैतस्य ब्रह्मा रसः । तस्मा-
द्ब्रह्माणं ब्रह्मिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येत् । महापुरुष इति
यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भुतान्यैक्या भावयन्नन्यानि
तस्यैतस्यासावादित्यो रसः । स यश्चायमशरीरः प्रज्ञात्मा यश्चासावा-
दित्य एकमेतदिति विद्यात् । तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति ।
तदप्येतदृषिणोक्तम् । चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुण-
स्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्चेति
। एतामनुविधं संहितां संधीयमानां मन्य इति ह स्माह बाध्वः । एतं
ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा
एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं वनस्प-
तिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते । स
एष संवत्सरसंमानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा
। स य एवमेतं संवत्सरसंमानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं
वाङ्मयमात्मानं परस्मै शंसति ३

दुग्धदोहा अस्य वेदा भवन्ति न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य
पन्थानमिति । तदप्येतदृषिणोक्तम् । यस्तित्याज सचिविदं सखायं
न तस्य वाच्यपि भागो अस्ति । यदीं शृणोत्यलकं शृणोति न हि प्र
वेद सुकृतस्य पन्थामिति ॥ न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य
पन्थानमित्येतत्तदुक्तं भवति । तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयान्न
परस्मै महाव्रतेन स्तुवीत न परस्मा एतदहः शंसेत । कामं पित्रे वाचा-
र्याय वा शंसेदात्मन एवास्य तत्कृतं भवति । स यश्चायमशरीरः प्रज्ञा-
त्मा यश्चासावादित्य एकमेतदित्यवोचाम । तौ यत्र विहीयेते चन्द्रमा
इवादित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा

मञ्जिष्ठा व्यस्तः पायुः काककुलायगन्धिकमस्य शिरो वायति संपरे-तोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात् । स यत्करणीयं मन्येत तत्कुर्वीत यदन्ति यच्च दूरक इति सप्त जपेदादित्प्रत्नस्य रेतस इत्येका यत्र ब्रह्मा पवमानेति षळृद्वयं तमसस्परीत्येका । अथापि यत्र छिद्र इवादित्यो दृश्यते रथनाभिरिवाभिख्यायेत छिद्रां वा छायां पश्येत्तद-प्येवमेव विद्यात् । अथाप्यादर्शे वोदके वा जिह्मशिरसं वाशिरसं वात्मानं पश्येद्विपर्यस्ते वा कन्याके जिह्मेन वा दृश्येयातां तदप्येवमेव विद्यात् । अथाप्यपिधायाक्षिणी उपेक्षेत तद्यथा बटरकाणि संपतन्तीव दृश्यन्ते तानि यदा न पश्येत्तदप्येवमेव विद्यात् । अथाप्यपिधाय कर्णा उपशृणुयात्स एषो अग्नेरिव प्रज्वलतो रथस्येवोपब्दिस्तं यदा न शृणुया-त्तदप्येवमेव विद्यात् । अथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्री-वामेघे वा विद्युतं पश्येन्मेघे वा विद्युतं न पश्येन्महामेघे वा मरीचीरिव पश्येत तदप्येवमेव विद्यात् । अथापि यत्र भूमिं ज्वलन्तीमिव पश्येत तदप्येवमेव विद्यात् । इति प्रत्यक्षदर्शनानि । अथ स्वप्नाः । पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति वराह एनं हन्ति मर्कट एनमास्कन्दयत्याशु वायुरेनं प्रवहति सुवर्णं खादित्वापगिरति मध्व-श्नाति बिसानि भक्षयत्येकपुण्डरीकं धारयति खरैर्वराहैर्युक्तैर्याति कृ-ष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति । स यद्येतेषां किञ्चित्प्रश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वान्येनान्नेन ब्राह्मणान्भोजयित्वा चरुं स्वयं प्राश्नीयात् । स योऽतो-ऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः श्रोता मन्ता द्रष्टादेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः स म आत्मेति विद्यात् ४

अथ खल्वियं सर्वस्यै वाच उपनिषत् । सर्वा ह्येवेमाः सर्वस्यै वा-च उपनिषद इमां त्वेवाचक्षते । पृथिव्या रूपं स्पर्शा अन्तरिक्षस्यो-ष्माणो दिवः स्वराः । अग्ने रूपं स्पर्शा वायोरूष्माण आदित्यस्य स्वराः । ऋग्वेदस्य रूपं स्पर्शा यजुर्वेदस्योष्माणः सामवेदस्य स्वराः ।

चक्षुषो रूपं स्पर्शाः श्रोत्रस्योष्माणो मनसः स्वराः । प्राणस्य रूपं स्पर्शा अपानस्योष्माणो व्यानस्य स्वराः । अथ खल्वियं दैवी वीणा भवति तदनुकृतिरसौ मानुषी वीणा भवति । यथास्याः शिर एवममुष्याः शिरो यथास्या उदरमेवममुष्या अम्भणं यथास्यै जिह्वैवममुष्यै वादनं यथास्यास्तन्त्रय एवममुष्या अङ्गुलयो यथास्याः स्वरा एवममुष्याः स्वरा यथास्या स्पर्शा एवममुष्या स्पर्शा यथा ह्येवेयं शब्दवती तर्द्मवत्येवमसौ शब्दवती तर्द्मवती यथा ह्येवेयं लोमशेन चर्मणापिहिता भवत्येवमसौ लोमशेन चर्मणापिहिता । लोमशेन ह स्म वै चर्मणा पुरा वीणा अपिदधति । स यो हैतां दैवीं वीणां वेद श्रुतवदनो भवति भूमिप्रास्य कीर्तिर्भवति यत्र क्व चार्या वाचो भाषन्ते विदुरेनं तत्र । अथातो वाग्रसो यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचिषेत तत्रैतामृचं जपेत् । ओष्ठापिधाना नकुली दन्तैः परिवृता पविः । सर्व-स्यै वाच ईशाना चारु मामिह वादयेत् । इति वाग्रसः ५

अथ हास्मा एतत्कृष्णहारितो वाग्ब्राह्मणमिवोपोदाहरति । प्रजापतिः प्रजाः सृष्ट्वा व्यस्त्रंसत संवत्सरः । स छन्दोभिरात्मानं समदधाद्य-च्छन्दोभिरात्मानं समदधात्तस्मात्संहिता । तस्यै वा एतस्यै संहिता-यै णकारो बलं षकारः प्राण आत्मा । स यो हैतौ णकारषकाराव-नुसंहितमृचो वेद सबलां सप्राणां संहितां वेदायुष्यमिति विद्यात् । स यदि विचिकित्सेत्सणकारं ब्रवाणीँ ३ अणकाराँ ३ इति सणकारमेव ब्रूयात्सषकारं ब्रवाणीँ ३ अषकाराँ ३ इति सषकारमेव ब्रूयात् । ते यद्वयमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकारषकारा उपाप्ताविति ह स्माह ह्रस्वो माण्डूकेयः । अथ यद्व-यमनुसंहितमृचोऽधीमहे यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो ण-कारषकारा उपाप्ताविति ह स्माह स्थविरः शाकल्यः । एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे वाचि हि प्राणं जुहुमः प्राणे वा वाचं यो ह्येव प्रभवः स एवाप्ययः । ता एताः संहिता नानन्तेवासिने प्रब्रूयान्नासंवत्सर-

वासिने नाप्रवक्त्र इत्याचार्या आचार्याः ६
इत्यैतरेयतृतीयारण्यके द्वितीयोऽध्यायः
इति तृतीयारण्यकं समाप्तम्

## अथ चतुर्थारण्यकम्

विदा मघवन्विदा गातुमनु शंसिषो दिशः
शिक्षा शचीनां पते पूर्वीणां पुरूवसो १

आभिष्ट्वमभिष्टिभिः प्रचेमन प्र चेतय
इन्द्र द्युम्नाय न इष एवा हि शक्रः २

राये वाजाय वज्रिवः शविष्ठ वज्रिन्नृञ्जसे
मंहिष्ठ वज्रिन्नृञ्जस आ याहि पिब मत्स्व ३

विदा रायः सुवीर्यं भुवो वाजानां पतिर्वशां अनु
मंहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् ४

यो मंहिष्ठो मघोनां चिकित्वो अभि नो नय
इन्द्रो विदे तमु स्तुषे वशी हि शक्रः ५

तमूतये हवामहे जेतारमपराजितम्
स नः पर्षदति द्विषः क्रतुच्छन्द ऋतं बृहत् ६

इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम्
स नः पर्षदति द्विषः स नः पर्षदति स्रिधः ७

पूर्वस्य यत्ते अद्रिवः सुम्न आ धेहि नो वसो
पूर्तिः शविष्ठ शस्यत ईशे हि शक्रः ८

नूनं तं नव्यं संन्यसे प्रभो जनस्य वृत्रहन्

समन्येषु ब्रवावहै शूरो यो गोषु गछति सखा सुशेवो अद्वयाः ६
एवा ह्येवैवा ह्यग्नाइइ ॥ एवा ह्येवैवा हीन्द्राइ ॥ एवा ह्येवैवा हि विष्णाइ उ ॥ एवा ह्येवैवा हि पूषाइन् ॥ एवा ह्येवैवा हि देवाइः १०

एवा हि शक्रो वशी हि शक्रो वशाँ इ अनु ॥ आ यो मन्याम मन्यव उपो मन्याय मन्यवे ॥ उपेहि विश्वध ११

विदा मघवन्विदोइम्

इत्यैतरेयारण्यके चतुर्थारण्यं समाप्तम्

## अथ पञ्चमारण्यकम्

महाव्रतस्य पञ्चविंशतिं सामिधेन्यः । एकविंशतौ प्रागुपोत्तमायाः समिधाग्निमिति चतस्त्रः । वैष्वकर्मण ऋषभ उपालम्भनीय उपांशु । आज्यप्रउगे विश्वजितः । होत्राश्चतुर्विंशात् । ईङ्खयन्तीरपस्युव इति च ब्राह्मणाच्छंस्यावपेत प्रातःसवने तीव्रस्याभिवयसो अस्य पा-हीति माध्यन्दिने । त्रिकद्रुकेषु महिषो यवाशिरमिति स्तोत्रियः । एन्द्र याह्युप नः परावत इन्द्राय हि द्यौरसुरो अनम्रत प्रो ष्वस्मै पुरोर-थमित्यतोऽनुरूपः । चतुर्विंशान्मरुत्वतीयस्यातानोऽसत्सु मे जरितः साभिवेगः पिबा सोममभि यमुग्र तर्दः कया शुभा सवयसः सनीळा मरुत्वाँ इन्द्र वृषभो रणाय जनिष्ठा उग्रः सहसे तुरायेति मरुत्वतीयम् । स्थिते मरुत्वतीये होता विसंस्थितसंचरेण निष्क्रम्याग्नीध्रीये तिस्त्र आज्याहुतीर्जुहोत्यौदुम्बरेण स्त्रुवेण ।
अनु मामिन्द्रो अनु मां बृहस्पतिरनु सोमो अनु वाग्देव्यावीत् ॥

अनु मां मित्रावरुणाविहावतामनु द्यावापृथिवी पूर्वहूतौ ॥

आदित्या मा विश्वे अवन्तु देवाः सप्त राजानो य उताभिषिक्ताः ।

वायुः पूषा वरुणः सोमो अग्निः सूर्यो नक्षत्रैरवत्विह मा नु ॥
पितरो मा विश्वमिदं च भूतं पृश्निमातरो मरुतः स्वर्काः ।
ये अग्निजिह्वा उत वा यजत्रास्ते नो देवाः सुहवाः शर्म यछतेति ॥

दक्षिणे मार्जालीये दश स्रुच्युत्तमां चतुर्गृहीतं पूर्वमवदायोत्तरतोऽग्नेरु-पनिधाय विहरणप्रभृति मध्यन्दिने मार्जालीयो जागरितो भवति त-स्मिन्परिवृते जुहोति प्राग्द्वारे वोदग्द्वारे वा प्रागुदग्द्वारे वा । अग्नि-रिवानाधृष्यः पृथिवीव सुषदा भूयासम् । अन्तरिक्षमिवानाप्यं द्यौ-रिवानाधृष्यो भूयासम् । सूर्य इवाप्रतिधृष्यश्चन्द्रमा इव पुनर्भूर्भूया-सम् । मन इवापूर्वं वायुरिव श्लोकभूर्भूयासम् । अहरिव स्वं रात्रिरिव प्रियो भूयासम् । गाव इव पुनर्भुवो मिथुनमिव मरीचयो भूयासम् । आप इव रस ओषधय इव रूपं भूयासम् । अन्नमिव विभु यज्ञ इव प्रभुर्भूयासम् । ब्रह्मेव लोके क्षत्रमिव श्रियां भूयासम् । यदग्न एषा समितिर्भवातीति । अत्र विभजाथ वीथेति त्रीण्यनन्वृचम् । अत्र तिष्ठन्नादित्यमुपतिष्ठते पर्यावृत्ते प्रदक्षिणमावृत्त्यैतैश्चैवास्वाहाकौरेरेह्ये-वा३ इदं मधू३ इदं मधु इमं तीव्रसुतं पिबा३ इदं मधू३ इदं मध्विति च । प्रेष्याः संशास्ति पूर्णकुम्भास्तिस्रोऽवमाः षळुत्तमाः । इमं धिष्ण्य-मुदकुम्भं च त्रिः प्रदक्षिणं परिव्रजाथ दक्षिणैः पाणिभिर्दक्षिणानूरूना-घ्नाना एह्येवा३ इदं मधू३ इदं मध्विति वदत्यः १

उपाकृते स्तोत्रे त्रैधं निनयाथात्रोत्तरे च मार्जालीये शेषमन्तर्वेदीति । प्रदक्षिणमग्निं निष्क्रम्याग्रेण यूपं पुरस्तात्प्रत्यङ्मुखस्तिष्ठन्नग्नेः शिर उपतिष्ठते नमस्ते गायत्राय यत्ते शिर इति । तेनैव यथेतं प्रत्येत्य दक्षिणमुदङ्मुखः पक्षं नमस्ते राथन्तराय यस्ते दक्षिणः पक्ष इति । अपरेणाग्निपुछमतिक्रम्य प्राङ्मुख उत्तरं नमस्ते बृहते यस्त उत्तरः पक्ष इति । पश्चात्प्राङ्पुछं नमस्ते भद्राय यत्ते पुछं या ते प्रतिष्ठेति । दक्षिणतः पुछस्यात्मानं नमस्ते राजनाय यस्त आत्मेति २

यथेतं सदः प्रसर्पति । पुरस्तात्प्रेङ्ख उपक्लृप्तो भवति । स्थूणे रज्जू वीवध इत्येतत्प्रक्षाल्य तीर्थेन प्रपाद्योत्तरेणाग्नीध्रीयं परिव्रज्य पूर्वया द्वारा सदः सर्वान्धिष्ण्यानुत्तरेण । औदुम्बराणि काष्ठानि प्रेङ्खस्य भवन्ति पालाशानि मिश्राणि वा । त्रीणि फलकान्युभयतस्तष्टानि द्वे वा सूच्यश्च तावत्यः । इषुमात्रः प्राङ्प्रेङ्खो निमुष्टिकस्तिर्यङ्ङुदगग्रः प्रागग्राभ्यां सूचीभ्यां समुतः । दक्षिणोत्तरे स्थूणे निखायाभितो होतृषदनं वीवधम-त्यादधात्यास्यसंमितं कर्तुः । कुष्ठासु छिद्राणि प्रेङ्खस्य भवन्ति रज्जुभ्या-मूर्ध्वमुद्ग्रयति दक्षिणतो दक्षिणयोत्तरतः सव्यया दार्भ्यै त्रिगुणे स्यातां सव्यदक्षिणे पञ्चव्यायामे द्विगुणे वीवधे त्रिः प्रदक्षिणं पर्यस्योर्ध्वग्रन्थिं निष्टर्क्यं बध्नाति । शाखाभिर्बृसीभिर्वा पर्यृषन्त्यप्रकम्पि । चतुरङ्गुलेनैष विभूमः प्रेङ्खः स्यान्मुष्टिमात्रेण वा । दक्षिणत उदाहिततरः समो वा । पदमात्रे धिष्ण्यात् ३

निष्ठिते प्रेङ्खे होता वाणमौदुम्बरं शततन्तुमुभाभ्यां परिगृह्योत्तरत उपोहते यथा वीणाम् । सप्तभिश्छन्दोभिश्चतुरुत्तरैः स्थानान्यस्योर्ध्वमुदूह्णीया-द्दशभिर्वा । गायत्रेण त्वा छन्दसोदूहाम्यौष्णिहेन त्वानुष्टुभेन त्वा बा-र्हतेन त्वा पाङ्क्तेन त्वा त्रैष्टुभेन त्वा जागतेन त्वा वैराजेन त्वा द्वैपदेन त्वातिछन्दसा त्वेति । छन्दांस्यनुक्रम्य स्थानानामनुपरिक्रमणमौदुम्ब-र्यार्द्रया शाखया सपलाशया मूलदेशेन वाणं त्रिरूर्ध्वमुल्लिखति । प्राणाय त्वापानाय त्वा व्यानाय त्वोल्लिखामीति । अन्येभ्योऽपि कामेभ्यः पुनरपि न तूल्लिखामीति ब्रूयात् । अथैनं सशाखं छन्दोगेभ्यः प्रयछति । भूतेभ्यस्त्वेति पश्चार्द्धे फलके पाणी प्रतिष्ठापयति प्राण-मनुप्रेङ्खस्वेति प्राञ्चं प्रेङ्खं प्रणयति व्यानमनुवीङ्खस्वेति तिर्यञ्च-मपानमन्वीङ्खस्वेत्यभ्यात्मम् । भूर्भुवः स्वरिति जपति । प्राणाय त्वेति प्राञ्चमेव व्यानाय त्वेति तिर्यञ्चमपानाय त्वेत्यभ्यात्मम् वसवस्त्वा गायत्रेण छन्दसारोहन्तु तानन्वारोहामीति पश्चार्द्धे फलकेऽरत्नी प्रतिष्ठापयति । अथ पूर्वं फलकं नाना पाणिभ्यामभिपद्येत यथाहिः स्त्रप्स्यन् । मध्यमं छुबुकेनोपस्पृशेद्द्वयोर्वा संधिम् । रुद्रास्त्वा त्रैष्टुभेन

छन्दसारोहन्तु तानन्वारोहामीति दक्षिणं सक्थ्यतिहरति । आदित्या-स्त्वा जागतेन छन्दसारोहन्तु तानन्वारोहामीति सव्यम् । विश्वे त्वा देवा आनुष्टुभेन छन्दसारोहन्तु तानन्वारोहामीति समारोहति पश्चात्स्वस्य धिष्ण्यस्य दक्षिणं पादं प्राञ्चं प्रतिष्ठापयत्यथ सव्यं यदेतरः श्राम्येदथेतरं यदेतरोऽथेतरं । नोभौ विभूमौ कुर्यात् । कूर्चान्होत्रकाः समारोहन्ति ब्रह्मा चौदुम्वरीमासन्दीमुद्गाता । यदि कस्मैचिदवश्यकर्मणे जिगमि-षेदादिश्य पालं प्राङ्वरुह्य चरित्वा तमर्थमेवमेवाजपयावृतारोहेत् ४

प्रस्तोतारं संशास्ति पञ्चविंशस्य स्तोमस्य तिसृष्वर्धतृतीया-स्वर्धत्रयोदशासु वा परिशिष्टासु प्रथमं प्रतिहारं प्रब्रूतादिति । अर्धत्रयोदशासु प्रवाचयतेति जातूकर्ण्यः । प्रोक्ते जपति । सुपर्णोऽसि गरुत्मान्प्रेमां वाचं वदिष्यामि बहु वदिष्यन्तीं बहु पतिष्यन्तीं बहु करिष्यन्तीं बहु सनिष्यन्तीं बहोर्भूयः करिष्यन्तीं स्वर्गछन्तीं स्वर्वदि-ष्यन्तीं स्वः पतिष्यन्तीं स्वः करिष्यन्तीं स्वः सनिष्यन्तीं स्वरिमं यज्ञं वक्ष्यन्तीं स्वर्मां यजमानं वक्ष्यन्तीमिति । दीक्षिते यजमानशब्दो नादीक्षिते । स्वरमुमिति योऽस्य प्रियः स्यान्न तु वक्ष्यन्तीमिति ब्रूयात् । उक्थवीर्याणि च । सं प्राणो वाचा समहं वाचा सं चक्षुर्मनसा समहं मनसा सं श्रोत्रमात्मना समहमात्मना मयि महान्मयि भर्गो मयि भगो मयि भुजो मयि स्तोभो मयि स्तोमो मयि श्लोको मयि घोषो मयि यशो मयि श्रीर्मयि कीर्तिर्मयि भुक्तिरिति । आहूय वागिति जपति । त्रय आहावाः शस्त्रादेर्निविदः परिधानीयाया इति । शब्दानध्वर्यवः कारयन्ति । एतस्मिन्नहनि प्रभूतमन्नं दद्यात् । राजपुत्रेण चर्म व्याध-यन्त्याघ्नन्ति भूमिदुन्दुभिं पत्न्यश्च काण्डवीणा भूतानां च मैथुनं ब्रह्मचारिपुंश्चल्योः संप्रवादोऽनेकेन साम्ना निष्केवल्याय स्तुवते राजनस्तोत्रियेण प्रतिपद्यते ५

तदिदास भुवनेषु ज्येष्ठं तां सु ते कीर्तिं मघवन्महित्वा भूय इद्वावृधे वीर्याय । नृणामु त्वा नृतमं गीर्भिरुक्थैरिति तिस्रः । अत्र हैके स्वादोः

स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीरित्यात्मन एते पदे उद्धृत्य पच्चपदे प्रत्यवदधात्यश्वायन्तो मघवन्निन्द्र वाजिनो गामश्वं रथ्यमिन्द्र सं किरेत्येतयोश्च स्थान इतरे । श्रियमह गोरश्वमात्मन्धत्ते सं पच्चयोः पतनाय । नदं व ओदतीनामित्येतयैतानि व्यतिषजति पादैः पादान्बृहतीकारं नदवन्त्युत्तराणि प्रथमायां च पुरुषाच्चराण्युपदधाति पादेष्वेकैकमवसाने तृतीयवर्जं स खलु विहरति । अपि निदर्शनायो-दाहरिष्यामः । तदिदास भुवनेषु ज्येष्ठं पु । नदं व ओदतीनाम् । यतो जज्ञ उग्रस्त्वेषनृम्णो रु । नदं योयुवतीनो३म् । सद्यो जज्ञानो नि रिणाति शत्रून् पतिं वो अघ्न्यानाम् । अनु यं विश्वे मदन्त्युमाः षो । धेनूनामिषुध्यसोऽ३मिति ॥ एवमेतां त्रिः । अन्यासु चेत्समाम्नातासु राजनेन साम्ना स्तुवीरन्यथास्थानं ता इहैवेमाः । असमाम्नातासु चेत्स्तु-वीरन्समाम्नातस्य तावतीरुद्धृत्य तत्र ताः शंसेदिहो एवेमाः । अन्यासु चेत्प्राक्सूददोहसस्ताः । तदिदासेत्येतदादि शस्त्रम् । अविहृतश्चात्र प्रतिगरः । ता अस्य सूददोहस इत्येतदादिः सूददोहाः सूददोहाः ६

इत्यैतरेयपञ्चमारण्यके प्रथमोऽध्यायः

ग्रीवाः । यस्येदमारजस्तुजो युजो वनं सहः । इन्द्रस्य रन्त्यं बृहत् ॥ नाधृष आ दधर्ष दाधृषाणं धृषितं शवः । पुरा यदीमति व्यथिरिन्द्रस्य धृषितं सहः ॥ स नो ददातु तं रयिं रयिं पिशङ्गसंदृशम् । इन्द्रः पतिस्तवस्तमो जनेष्वा ॥ सूददोहाः । शिरो गायत्रमिन्द्रमिद्गाथिनो बृहदिति । अन्यासु चेत्समाम्नातासु स्तुवीरन्नुभया संस्थानविपर्ययो-ऽसमाम्नातासु चेत्स्तुवीरन्मिश्रासु च । सूक्तस्योत्तमां सूददोहाः । विजवः । सुतस्ते सोम उप याहि यज्ञं मत्स्वा मदं पुरु वारं मघाय । मंहिष्ठ इन्द्र विजरो गृणध्यै ॥ स साहतुर्वृत्रहत्येषु शत्रूनृभुर्विगाह एषः । स नो नेतारं महयाम इन्द्रम् ॥ इनो वसुः समजः पर्वतेष्ठाः प्रति वामृजीषी । इन्द्रः शश्वद्भिर्जोहूत्र एवैः ॥ सूददोहाः । इत्येतत्त्रयं ग्रीवाः शिरो विजवः सर्वमर्धर्च्यम् १

राथन्तरो दच्चिणः पच्चः । अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति रथन्तरस्य स्तोत्रियानुरूपौ प्रगाथौ चतस्रः सतीः षड्बृहतीः करोति । इन्द्रस्य नु वीर्याणि प्रवोचं त्वे ह यत्पितरश्चिन्न इन्द्रेति पञ्चदश यस्तिग्मशृङ्गो वृषभो न भीम उग्रो जज्ञे वीर्याय स्वधावानुदु ब्रह्माण्यैरत श्रवस्याते मह इन्द्रोऽत्युग्रेति पञ्च सूक्तानि । आ न इन्द्रो दूरादा न आ-सादिति संपातः । इत्था हि सोम इन्मद इति पङ्क्तिः । सूददोहाः । बार्हत उत्तरः । त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहतः स्तोत्रि-यानुरूपौ प्रगाथौ । चतस्रः सतीः षड्बृहतीः करोति । तमु ष्टुहि यो अभिभूत्योजाः सुत इत्त्वं निमिश्ल इन्द्र सोम इति त्रीण्यभूरेको रयिपते रयीणामित्यष्टौ सूक्तानि । कथा महामवृधत्कस्य होतुरिति संपातः । इन्द्रो मदाय वावृध इति पङ्क्तिः । सूददोहाः । राथन्तरो दच्चिणः पच्चः पञ्चदशस्तोम एकशतं वसिष्ठप्रासाहो बार्हत उत्तरः सप्तदशस्तोमो द्विशतं भरद्वाजप्रासाहः । भद्रं पुछं द्विपदासु । इमा नु कं भुवना सीषधामा याहि वनसा सहेति नव समाम्नाताः । अथासमाम्नाताः ।

प्र व इन्द्राय वृत्रहन्तमाय विप्रा गाथं गायत यज्जुजोषत् १
अर्चन्त्यर्कं देवताः स्वर्का आस्तोभति श्रुतो युवा स इन्द्रः २
उप प्रचे मधुमति चियन्तः पुष्यन्तो रयिं धीमहे तमिन्द्र ३
विश्वतो दावन्विश्वतो न आ भर यं त्वा शविष्ठमीमहे ४
स सुप्रणीते नृतमः स्वराळसि मंहिष्ठो वाजसातये ५
त्वं ह्येक ईशिषे सनादमृक्त ओजसा ६
विश्वस्य प्र स्तोभ विद्वान्पुरा वा यदि वेहास नूनम् ७
इषं नो मित्रावरुणा कर्तनेळां पीवरीमिषं कृणुही न इन्द्र ८
शं पदं मघं रयिषणि न सोमो अव्रतं हिनोति न स्पृशद्रयिः ९
एष ब्रह्मेति तिस्रः आ धूर्ष्वस्मा इत्येका । सूददोहाः । यद्वावानेति धाय्या । सूददोहाः २

गायत्री तृचाशीतिः । महाँ इन्द्रो य ओजसेति तिस्र उत्तमा उद्धरति । पुरोळाशं नो अन्धस इति तिस्रः । इन्द्र इत्सोमपा एक इत्येतत्प्रभृतीनां

तिस्र उत्तमा उद्धरति । तासां स्वादवः सोमा आ याहीत्येतामुद्धृत्य न ह्यन्यं बळाकरमित्येतां प्रत्यवदधाति । जज्ञानो नु शतक्रतुरित्येका । पुरुहूतं पुरुष्टुतमिति शेषः । उद्धेदभि श्रुतामघमित्युत्तमामुद्धरति । प्र कृतान्यृजीषिण आ घा ये अग्निमिन्धत आ तू न इन्द्र क्षुमन्तमिति सूक्ते । सूददोहाः ३

बार्हती तृचाशीतिः । मा चिदन्यद्वि शंसतेत्येकया न त्रिंशत् । पिबा सुतस्य रसिन इति विंशतेः सप्तमीं चाष्टमीं चोद्धरति । यदिन्द्र प्रागपागुदगिति चतुर्दश । वयं घ त्वा सुतावन्त इति पञ्चदश । मो षु त्वा वाघतश्चनेत्येतस्य द्विपदां चोद्धरति राथन्तरं च प्रगाथम् । अथ हास्य न किः सुदासो रथमित्येतं प्रगाथमुद्धृत्य त्वामिदा ह्यो नर इत्येतं प्रगाथं प्रत्यवदधाति । अभि प्र वः सुराधसमिति षड्वालखिल्यानां सूक्तानि । यः सत्राहा विचर्षणिरिति शेषः । अयं ते अस्तु हर्यत इति सूक्ते । उभयं शृणवच्च न इति सप्तमीं चाष्टमीं चोद्धरति । तरोभिर्वो विदद्वसुमित्युत्तमामुद्धरति । यो राजा चर्षणीनामित्येकादश । तं वो दस्ममृतीषहमा नो विश्वासु हव्यो या इन्द्र भुज आभर इति नव । सूददोहाः ४

औष्णिही तृचाशीतिः । य इन्द्र सोमपातम इति सूक्ते । तम्वभि प्र गायतेत्युत्तमामुद्धरति । इन्द्राय साम गायत सखाय आ शिषामहीति तिस्र उत्तमा उद्धरति । य एक इद्विदयत आ याह्यद्रिभिः सुतं यस्य त्यच्छम्बरं मद इति त्रयस्तृचा गायत्र्यः संपदोष्णिहः सप्त सप्त गायत्र्यः षट्ब्रळुष्णिहो भवन्ति । यदिन्द्राहं यथा त्वं प्र सम्राजं चर्षणीनामिति सूक्ते । उत्तरस्योत्तमे उद्धरति । बार्त्रहत्याय शवस इत्युत्तमामुद्धरति । सुरूपकृत्नुमूतय इति त्रीणि । एन्द्रसानसिं रयिमिति सूक्ते । य आनयत्परावत इति तिस्र उत्तमा उद्धरति । रेवतीर्नः सधमाद इति तिस्रः । सूददोहाः । इत्येतास्तिस्रस्तृचाशीतयः सर्वा अर्धर्च्याः । अन्नमशीतयः । उदरं वशः । त्वावतः पुरूवसविति वशः । सनितः

सुसनितरित्येतदन्तः । ददी रेक्ण इति द्विपदा । नूनमथेत्येकपदा । ता अस्य सूददोहस इत्येतदन्तः सूददोहाः सूददोहाः ५
इत्यैतरेयपञ्चमारगयके द्वितीयोऽध्यायः

ऊरू । इन्द्राग्नी युवं सु न इत्येतस्यार्धर्चान्गायत्रीकारमुत्तरमुत्तरस्या-नुष्टुप्कारं प्रागुत्तमायाः । प्र वो महे मन्दमानायान्धस इति निविद्धानम् । वने न वा यो न्यधायि चाकन्यो जात एव प्रथमो मनस्वानिति ते अन्तरेणा याह्यर्वाङुप वन्धुरेष्ठा विधुं दद्राणं समने बहूनामित्येतदा-वपनम् । दशतीनामैन्द्रीणां त्रिष्टुब्जगतीनां बृहतीसपन्नानां यावतीरा-वपेरंस्तावन्त्यूर्ध्वमायुषो वर्षाणि जिजीविषेत्संवत्सरात्संवत्सराद्दशतो न वा । त्यमू षु वाजिनं देवजूतम् । इन्द्रो विश्वं वि राजतीत्येकपदा । इन्द्रं विश्वा अवीवृधन्नित्यानुष्टुभम् । तस्य प्रथमायाः पूर्वमर्धर्चं शस्त्वोत्तरेणार्धर्चेनोत्तरस्याः पूर्वमर्धर्चं व्यतिषजति पादैः पादान-नुष्टुप्कारम् । प्रागुत्तमायाः पूर्वस्मात्पुर्वस्मादर्धर्चादुत्तरमुत्तरमर्धर्चं व्य-तिषजति । प्रकृत्या शेषः । पिबा सोममिन्द्र मन्दतु त्वेति षट् । योनिष्ट इन्द्र सदने अकारीत्येतस्य चतस्रः शस्त्वोत्तमामुपसंत-त्योपोत्तमया परिदधाति । परिहित उक्थ उक्थसंपदं जपति । उक्थ-वीर्यस्य स्थान उक्थदोहः १

मूर्धा लोकानामसि वाचो रसस्तेजः प्राणस्यायतनं मनसः
संवेशश्चक्षुषः संभवः श्रोत्रस्य प्रतिष्ठा हृदयस्य सर्वम् १

इन्द्रः कर्माश्रितममृतं व्योम ऋतं सत्यं विजिग्यानं विवाचनम्
अन्तो वाचो विभुः सर्वस्मादुत्तरं ज्योतिरूधरप्रतिवादः पूर्वम् २

सर्वं वाक्परागर्वाक्सप्रु सलिलं धेनु पिन्वति चक्षुः श्रोत्रं प्राणः
सत्यसंमितं वाक्प्रभूतं मनसो विभूतम् हृदयोग्रं ब्राह्मणभर्तृकम् ३

अन्नशुभे वर्षपवित्रं गोभगं पृथिव्युपरं वरुणवाय्वितमम्

तपस्तन्विन्द्रज्येष्ठं सहस्रधारमयुताक्षरममृतं दुहानम् ४
एतास्त उक्थ भूतय एता वाचो विभूतयः
ताभिर्म इह धुक्ष्वामृतस्य श्रियं महीम् ५

प्रजापतिरिदं ब्रह्म वेदानां ससृजे रसम् ।
तेनाहं विश्वमाप्यासं सर्वान्कामान्दुहां महत् ६

भूर्भुवः स्वस्त्रयो वेदोऽसि । ब्रह्म प्रजां मे धुक्ष्व । आयुः प्राणं मे धुक्ष्व । पशून्विशं मे धुक्ष्व । श्रियं यशो मे धुक्ष्व । लोकं ब्रह्मवर्चसमभयं यज्ञसमृद्धिं मे धुक्ष्व । इति वाचयत्यध्वर्युमबुद्धं चेदस्य भवति । ओमुक्थशा यज सोमस्येतीज्यायै संप्रेषितो ये३ यजामह इत्यागूर्य नित्ययैव यजति व्यवान्येवानुवषट्करोति । उक्तं वषट्कारानुमन्त्रणम् । आहरत्यध्वर्युरुक्थपात्रमतिग्राह्यांश्चमसांश्च । भक्षं प्रतिख्याय होता प्राङ्प्रेङ्खादवरोहति । अथैतं प्रेङ्खं प्रत्यञ्चमवबध्नन्ति यथा शंसितारं भक्षयिष्यन्तं नोपहनिष्यसीति । प्रेङ्खस्य ह्यायतन आसीनो होता भक्षयति । अथैतदुक्थपात्रं होतोपसृष्टेन जपेन भक्षयति । वाग्देवी सोमस्य तृप्यतु । सोमो मे राजायुः प्राणाय वर्षतु । स मे प्राणः सर्वमायुर्दुहां महदिति । उत्तमादाभिप्लविकात्तृतीयसवनमन्यद्वैश्वदेवान्निविद्धानादस्य वामस्य पलितस्य होतुरिति सलिलस्य दैर्घतमस एकचत्वारिंशतमानोभद्रीयं च तस्य स्थान ऐकाहिकौ वैश्वदेवस्य प्रतिपदनुचरौ । च्यवेत चेद्व्यज्ञायज्ञीयमग्ने तव श्रवो वय इति षट्स्तोत्रियानुरूपौ यदीळान्दं भूयसीषु चेत्स्तुवीरन्नाग्निं न स्ववृक्तिभिरिति तावतीरनुरूपः । संपन्नं महाव्रतं संतिष्ठत इदमहरग्निष्टोमो यथाकालमवभृथं प्रेङ्खं हरेयुः संदहेयुर्बृसीः २

नादीक्षितो महाव्रतं शंसेन्नानग्नौ न परस्मै नासंवत्सर इत्येके कामं पित्रे वाचार्याय वा शंसेदात्मनो हैवास्य तच्छस्तं भवति । होतृशस्त्रेषूक्थशा यज सोमस्येत्येकः प्रैषः सनाराशंसेष्वनाराशंसेषु वा होत्रकाणाम् । उक्थशा यज सोमानामिति । तदिदमहर्नानन्तेवासिने प्रब्रूयान्नासंव-

त्सरवासिने नो एवासंवत्सरवासिने नाब्रह्मचारिणे नासब्रह्मचारिणे नो एवासब्रह्मचारिणे नानभिप्राप्तायैतं देशम् । न भूयः सकृद्वदना-द्विर्गदनाद्वा द्वय्येव । एक एकस्मै प्रब्रूयादिति ह स्माह जातूकर्ण्यः । न वत्से च न तृतीय इति । न तिष्ठंस्तिष्ठते न व्रजन्व्रजते न शयानः शयानाय नोपर्यासीन उपर्यासीनायाध एवासीनोऽध आसीनाय । नावष्टब्धो न प्रतिस्तब्धो नातिवीतो नाङ्कं कृत्वोर्ध्वज्ञुरनपश्रितोऽधीयीत न मांसं भुक्त्वा न लोहितं दृष्ट्वा न गतासुं नाव्रत्यमाक्रम्य नाक्त्वा नाभ्यज्य नोन्मर्दनं कारयित्वा न नापितेन कारयित्वा न स्नात्वा न वर्णकेना-नुलिप्य न स्रजमपिनह्य न स्त्रियमुपगम्य नोल्लिख्य नाविलिख्य । नेदमेकस्मिन्नहनि समापयेदिति ह स्माह जातूकर्ण्यः समापयेदिति गालवो यदन्यत्प्राक्तृचाशीतिभ्यः समापयेदेवेत्याग्निवेश्यायनोऽन्यम-न्यस्मिन्देशे शमयमान इति । यत्रेदमधीयीत न तत्रान्यदधीयीत यत्र त्वन्यदधीयीत काममिदं तत्राधीयीत । नेदमनधीयन्स्नातको भवति यद्यप्यन्यद्ब्रह्मधीयान्नैवेदमनधीयन्त्स्नातको भवति । नास्मादधीतात्प्र-माद्येद्यद्यप्यन्यस्मात्प्रमाद्ये‍न्नैवास्मात्प्रमाद्येन्नो एवास्मात्प्रमाद्येत् । अ-स्माच्चेन्न प्रमाद्येदलमात्मन इति विद्यात् । अलं सत्यं विद्यात् । नेदं-विदनिदंविदा समुद्दिशेन्न सह भुञ्जीत न सधमादी स्यात् । अथातः स्वाध्यायधर्मं व्याख्यास्यामः । उप पुराणेनापीते कच्चोदके पूर्वाह्णे न संभिन्नासु छायास्वपराह्णे नाध्यूळ्ह मेघेऽपर्तौ वर्षे त्रिरात्रं वैदिकेनाध्यायेनान्तरियान्नास्मिन्कथां वदेत नास्य रात्रौ चन चिकी-र्तयिषेत् । तदिति वा एतस्य महतो भूतस्य नाम भवति योऽस्यैतदेवं नाम वेद ब्रह्म भवति ब्रह्म भवति ३

इत्यैतरेयपञ्चमारण्यके तृतीयोऽध्यायः

इति पञ्चमारण्यकं समाप्तम्